THE

# KASHMIR SERIES OF TEXTS AND STUDIES

Published under the authority of the Government of
His Highness Major General Sir Pratap Singh,
G.C.S.I., G.C.I.E., Mahārāja Sahib Bahadur
of Jammu & Kashmir State.

EDITED BY

JAGADISHA CHANDRA CHATTERJI, B.A. (Cantab.)

VIDYĀVĀRIDHI,

WITH

The co-operation of the Pandits

OF

The Research Department

OF

THE KASHMIR STATE.

Vols. IV & V.

# काश्मीरग्रन्थावली

श्रीमत्-कश्मीरमहाराजादेशेन

सम्पादिता ।

चतुर्थ-पञ्चमखण्डे




SRINAGAR,

KASHMIR.

1916

Price, Paper Cover, Re. 1-12. In Cloth, Rs. 2-8.

# PREFACE.

In the preface to the Shiva Sûtra Vimarshinî (Vol. I of the series) it was promised that a comparison would be made, in the Introduction to the Shiva Sûtra Vârttika, between the interpretation of the Shiva Sûtras, as given by Bhâskara and published in this volume and that given by Kṣhemarâja in his Vimarshinî. But, owing to shortness in the stock of the same kind and quality of paper as has been used in the printing of the text of the Vârttika and it being thought inadvisable to use paper of a different sort in one and the same volume of a book, the publication of this promised Introduction is held back for the present.

But as the Text of the Vârttika alone, without the Introduction, would make but a small volume, it has been thought expedient to publish along with it the text of the Spanda Kârikâs, with the Vṛitti of Kallaṭa, which has been printed on the same paper as used in printing the Vârttika.

The text of the Shiva-Sûtra-Vṛitti, which is obviously only an extract from the Vimarshinî of Kṣhema Râja, published in the first volume of the series, is also given in this volume as an appendix to the text of the Vârttika, for the convenience of readers who may like to make a comparative study of the two different interpretations of the Shiva Sûtras, one given by Kṣhema Râja and the other as we have it in the Vârttika.

For an account of the Spanda Kârikâs the reader is referred to *Kashmîr Shaivaism*, (*i.e.*, volume II of the series) constituting a general introduction to the whole system.

# THE

# SHIVA SŪTRA VĀRTTIKA

BY

BHĀSKARA.



अथ

# शिवसूत्रवार्त्तिकम् ।




श्रीनगर

( कश्मीर )

संवत् १९७०

ओं तत्सत्

अथ

# शिवसूत्रवार्तिक-सूत्रपाठः ।

## १ मे प्रकाशे

१ चैतन्यमात्मा

२ ज्ञानं बन्धः

३ योनिवर्गः कलाशरीरम्

४ ज्ञानाधिष्ठानं मातृका

५ उद्यमो भैरवः

६ शक्तिचक्रसंधाने विश्वसंहारः

७ जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंवित्

८ ज्ञानं जाग्रत्

९ स्वप्नो विकल्पाः

१० अविवेको मायासौषुप्तम्

११ त्रितयभोक्ता वीरेशः

१२ विस्मयो योगभूमिकाः
१३ इच्छाशक्तिरुमा कुमारी
१४ दृश्यं शरीरम्
१५ हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम्
१६ शुद्धतत्त्वसंधानाद्वा
१७ स्वपदशक्तिः
१८ वितर्क आत्मज्ञानम्
१९ लोकानन्दः समाधिसुखम्
२० शक्तिसंधाने शरीरोत्पत्तिः
२१ भूतसंधान-भूतपृथक्त्व-विश्वसंघट्टाः
२२ शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः
२३ महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः

इति प्रथमप्रकाशसूत्राणि

---

२ ये प्रकाशे

१ चित्तं मन्त्रः
२ प्रयत्नः साधकः

३ विद्याशरीरसत्ता मन्त्ररहस्यम्

४ गर्भे चित्तविकासो विशिष्टोऽविद्यास्वप्नः

५ विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था

६ गुरुरुपायः

७ मातृकाचक्रसंबोधः

८ शरीरं हविः

९ ज्ञानमन्नम्

१० विद्यासंहारे तदुत्थस्वप्नदर्शनम्

इति द्वितीयप्रकाशसूत्राणि ॥

---

३ ये प्रकाशे

१ आत्मा चित्तम्

२ ज्ञानं बन्धः

३ कलादीनां तत्त्वानामविवेको माया

४ शरीरे संहारः कलानाम्

५ नाडीसंहार-भूतजय-भूतकैवल्य-भूतपृथक्त्वानि

६ मोहावरणात्सिद्धिः

७ मोहजयादनन्ताभोगात्सहजविद्याजयः

८ जाग्रद्द्वितीयकरः

९ नर्तक आत्मा

१० रङ्गोऽन्तरात्मा

११ प्रेक्षकाणीन्द्रियाणि

१२ धीवशात्सत्त्वसिद्धिः

१३ सिद्धः स्वतन्त्रभावः

१४ यथा तत्र तथान्यत्र

१५ विसर्गस्वाभाव्यादबहिःस्थितेस्तत्स्थितिः

१६ बीजावधानम्

१७ आसनस्थः सुखं ह्रदे निमज्जति

१८ स्वमात्रानिर्माणमापादयति

१९ विद्याविनाशे जन्मविनाशः

२० कवर्गादिषु माहेश्वर्याद्याः पशुमातरः

२१ त्रिषु चतुर्थं तैलवदासेच्यम्

२२ मग्नः स्वचित्ते प्रविशेत्

२३ मध्येऽवरप्रसवः

२४ प्राणसमाचारे समदर्शनम्

२५ मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम्

२६ शिवतुल्यो जायते

२७ शरीरवृत्तिर्व्रतम्

२८ कथा जपः

२९ दानमात्मज्ञानम्

३० योविपस्थो ज्ञाहेतुश्च

३१ स्वशक्तिप्रचयोऽस्य विश्वम्

३२ स्थितिलयौ

३३ तत्प्रवृत्तावप्यनिरासः संवेत्तृभावात्

३४ सुखासुखयोर्बहिर्मननम्

३५ तद्विमुक्तस्तु केवली

३६ मोहप्रतिसंहतस्तु कर्मात्मा

३७ भेदतिरस्कारे सर्गान्तरकर्मत्वम्

३८ करणशक्तिः स्वतोऽनुभवात्

३९ त्रिपदाद्यनुप्राणनम्

४० चित्तस्थितिवच्छरीरकरणबाह्येषु

४१ अभिलाषाद्बहिर्गतिः संबाह्यस्य

४२ तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः

४३ भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः

४४ नैसर्गिकः प्राणसंबन्धः

४५ नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्य-सौषुम्नेषु

४६ भूयः स्यात्प्रतिमीलनम्

इति तृतीयप्रकाशसूत्राणि ॥

समाप्तोऽयं शिवसूत्रवार्तिकसूत्रपाठः ॥



अथ

# शिवसूत्रवार्तिके सूत्रेषु प्रतिपादितविषयसंग्रहः

## तत्रादौ प्रथमप्रकाशे



१ ज्ञानक्रियात्मकत्वेन आत्मनः स्वरूपप्रतिज्ञानम्

२ अहन्ता - ममतात्मद्वैतप्रथाहेतुकस्यात्मस्वरूपावरणस्य लक्षणम्

३ अणोर्ज्ञानलोपकर्त्रीणां शक्तीनां निरूपणम्

४ द्वैतप्रथा-तत्कर्तृशक्तिसंश्रयादेर्निरूपणम्

५ स्वरूपावरणकृत्प्रोक्तज्ञानाभासनिवृत्त्यै स्वरूपविज्ञानाय च हेतोरनुशासनम्

६ स्वरूपपरिज्ञाने बाह्यान्तरतोऽपि अद्वैतज्ञप्त्यपरिहानिनिरूपणम्

७ जाग्रदाद्यवस्थासु तुल्यतया स्वरूपोपलब्धिदार्ढ्यकथनम्

८ सर्वभावेषु चिदात्मन एव ग्रहीतृ-ग्रहण-ग्राह्य-
तया स्फुरणात्मज्ञानशक्तिरूपाया जागराव-
स्थाया लक्षणम्

९ पशोरावरकनानाविधभावोल्लेखनात्मविकल्परू-
पस्वप्नावस्थाया लक्षणम्

१० ज्ञान-ज्ञेयस्वरूपशक्त्यनभिव्यक्तेः स्वरूपापोहक-
मायाशक्त्युद्भावितसुषुप्तावस्थालक्षणम्

११ स्वस्वरूपाभिनिविष्टस्य प्रोक्तावस्थात्रये समक-
क्ष्यतया सत्त्वादिगुणचमत्कर्तृत्वाद्धीरेश्वरत्वा-
भिधानम्

१२ विश्वात्मना स्फुरच्चिदात्मसमीक्षापरिनिष्ठस्या-
नुत्तरभूमिकाधिरोहात्मसिद्ध्यभिव्यक्तिकथनम्

१३ इत्थं परभूमिकाधिरूढस्य निरावरणचिद्रूप-
समावेशादखण्डितस्वातन्त्र्यावाप्तिनिरूपणम्

१४ अस्यैव ( योगिनः ) विश्वस्मिंस्तादात्म्यसंपत्त्या
अन्तर्बहिर्व्यापित्वकथनम्

१५ विषयविषय्याद्याधारभूते हृदि समस्तवासनावि-
लयनात्सर्वभावानां याथात्म्यावबोधनिरूपणम्

इति प्रथमः प्रकाशः ॥१॥

---

अथ द्वितीये प्रकाशे

वेक्षणात् स्वालोककलनात्मनित्यतृप्ततादेशनम्

इति द्वितीयः प्रकाशः

---

अथ तृतीये प्रकाशे

१ स्वरूपप्रथनादिना विवक्षिते विभूतिप्रकरणे प्रथमतः संकल्पन-मननादिधर्मस्याणुसंबन्धिचित्तस्यात्मतया लक्षणम्

२ चित्तस्य रागादिविषयसंश्लेषाद्विक्षिप्ततया अवास्तवज्ञानस्य बन्धकत्वनिरूपणम्

३ तत्त्वानां याथात्म्यबोधाभावरूपाया मायायाः स्वरूपकथनम्

४ तत्त्वसंघातोपादानकदेहस्यांशानां स्वकारणे लयभावनादार्ढ्यात् स्वात्मस्वरूपावाप्त्या आणवोपायफल-परबोधात्मदेहाधिगमनिरूपणम्

५ पृथिव्यादिभूतमयदेहस्याप्यस्य तत्तद्भूतधारणाभ्यासपाटवात्तत्तद्भूत-भौतिकस्थिति-संचार-निर्माण-संयोजन-वियोजनादौ स्वातन्त्र्यनिरूपणम्

६ प्रोक्ततत्त्वधारणादिपाटवात् योगिनो मोहकर्तृकावरणेन तत्तत्तत्त्वभोगसिद्ध्यभिलषणस्य, तदन्यथात्वे प्राच्यशुद्धावस्थाविमर्शनेन सार्वज्ञ्यादिसिद्ध्यभ्युपगमस्य च निरूपणम्

७ अनन्ततया विस्तृताख्यात्यात्ममोहप्रशमनात्सुप्रबुद्धस्य स्वप्रकाशात्मशुद्धविद्योदयनिरूपणम्

८ इत्थमधिगतसहजविद्यतया विश्वं स्वदीधितिकल्पं समीक्षमाणस्य नित्यप्रबुद्धावस्थया परिनिष्ठाकथनम्

९ विश्वस्मिन् यावत्तत्तद्भावरसावेशाद्यथेष्टतया चेष्टमानस्य आत्मनो जगन्नाट्यलीलाभिभावकत्वनिरूपणम्

१० प्रोक्तगुणकात्मकर्तृकप्रवृत्तिस्थित्यादिजगन्नाट्यलीलाधारतया पुर्यष्टकस्य रङ्गत्वाभिधानम्

११ अस्यैव सुप्रबुद्धतया वशवर्तिनामिन्द्रियाणां जगन्नाट्यलीलाप्रेक्षकत्वेन समभिव्याहरणम्

१२ शुद्धचिद्रूपाध्यवसायिबुद्धिसद्भावात्सर्वोत्कृष्टतानुशासनम्

१३ उक्तगुणस्यात्मनः स्वातन्त्र्यसिद्धिसंपन्नत्वनिरू-
पणम्

१४ अधिष्ठीयमानदेहवत् अन्वाश्रितपरकीयदेहादा-
वपि सार्वज्ञ्य-स्वातन्त्र्यादिगुणाविर्भावनिरूपणम्

[२-१४] १५ परकायप्रवेशादिस्वतन्त्रस्यास्य स्वधा-
म्नो विभ्रंशानवाप्त्यादिनिरूपणम्

१६ विश्वकारणशाक्तपदे निरन्तराभ्यासेन विदात्म-
विमर्शनसमाहितत्वस्यैव स्वधामाप्रच्युतिनिमि-
त्ततयादेशनम्

१७ शाक्तपदसमावेशाधिगमात्परस्वरूपसुगमतानि-
दर्शनम्

१८ उक्तावधान-प्रवेशात्मोपायद्वयपरिशीलनात्स्वात-
न्त्र्यधामविक्रान्तत्वद्योतकस्यापूर्ववस्तुसंपादन-
सामर्थ्यवत्त्वस्य निरूपणम्

१९ उक्तोपायपरिशीलनाच्छुद्धविद्योदयस्यापुनर्जन्मा-
त्मफलानुशासनम्

२० प्राप्तसिद्धिकस्याप्यणोरवधानस्खलनात् शब्दा-
नुवेधनतो घोरादिसंज्ञकमाहेश्वर्यादिमातृका-
शक्तीनां मोहकत्वनिरूपणम्

२८ तथैवं पराहंभावभावनापदारूढसंबन्धिसामान्यसंभाषणस्यापि जपतया निरूपणम्

२९ अस्यैव पशुषु आत्मस्वरूपज्ञप्तिप्रकाशनस्य दानतया अतिदेशनम्

३० उक्तसंसिद्धियोगिनो विश्वोल्लासनादिसामर्थ्यवैश्वरूप्यभोगान्मोक्षप्रदत्वादिनिरूपणम् ।

३१ शिवतुल्यतापत्तेर्निजानुत्तरशक्तिमयविश्वात्मना स्फुरत्तानिरूपणम्

३२ विश्वात्मत्वाधिगमात् क्रियाशक्त्युन्मीलितविश्वस्य स्वेच्छया स्थिति-लयकर्तृत्वनिरूपणम्

३३ सृष्टिस्थितिध्वंसकालेपि अविलुप्तस्वस्वरूपत्वादेशनम्

३४ स्वविमर्शाप्रच्युत्या आध्यात्मिकादिनानाविधसुखदुःखाविर्भावेऽपि तदस्पर्शनिरूपणम् ।

३५ सुखाद्यसंस्पृष्टस्याविलुप्तस्वात्मविभवतया केवलचिन्मात्रविश्रान्तत्वकथनम्

३६ शरीराद्यहंभावविजृम्भणे सुखादिमोहाभिघातात् कर्मात्मसंसारिपशुत्वनिरूपणम्

३७ स्वव्यतिरिक्तं किंचनाप्यपर्यालोचयतः स्वस्वरूपप्रत्यापत्त्या नवनवोल्लेखसंनिवेशचित्रितापूर्वसर्गकर्तृत्वसामर्थ्यावाप्तिनिरूपणम्

३८ विचित्रभावोल्लासनात्मसर्गान्तरोत्पादनसामर्थ्ये स्वानुभवस्यैव हेतूपदेशनम्

३९ जागराद्यवस्थामुख्यभूततुर्यावस्थाया भावानां स्वबलार्पणे निदानादेशनम्

४० चित्तस्य स्वरूपादप्रच्युतेः करणग्रामेपि स्वरूपप्रथया चिदात्मताभिव्यञ्जनकथनम्

४१ अधरावस्थायां दर्शनश्रवणादिप्रवृत्तीच्छोरात्मनो बुद्धिकर्मेन्द्रियेषु चिद्बलाधानेच्छात्माभिलाषेण संबाह्यकरणचक्रस्य प्रेरणात् शब्दस्पर्शादिविषयेषु प्रवर्तननिरूपणम्

४२ स्वबलोद्योगाधिष्ठानात् रूढविज्ञानस्य पाशवाभिलाषहानात् संबाह्यात्मपुर्यष्टकप्रशमसंभवादेशनम्

४३ अभिलाषात्ममलप्रक्षये सर्वज्ञत्वसर्वकर्तृत्वादिभूम्यारूढस्य भौतिकदेहसंबन्धसत्तया शिवतुल्यताप्रशंसनम्

४४ स्वप्रकाशसंविन्निष्ठत्वात् पुर्यष्टकाभिमानप्रशमेपि यावत्कर्मोपभोगं प्राकृतिकतया प्राणतत्संबद्धभूतकञ्चुकावस्थितेर्निरूपणम्

४५ शिवतुल्यतावाप्तौ अनुत्तरस्वात्मासिद्ध्यभ्यसनार्थं प्राणात्मानाहृतशब्दब्रह्मोपासनानिर्देशः

४६ मायाशक्तिवशादभेदखण्डनामुपपन्नस्य विभोः प्रोक्तोपदेशमार्गेण कालुष्यप्रक्षयात्स्वात्मावबोधाधिगमे पूर्णघनानन्दशिवताभ्युपगमानुशासनम्

इति तृतीयः प्रकाशः ॥ ३ ॥

समाप्तश्च शिवसूत्रवार्तिकसूत्राणां विषयार्थसंग्रहः ॥

---

ओं नमः श्रीशंभवे स्वात्मानन्दप्रकाशवपुषे ।

अथ

# शिवसूत्राणि ।

## श्रीभट्टभास्कराचार्य-विरचितवार्तिकोपेतानि ।

### तत्रायं प्रथमः प्रकाशः

—:०:—

हिमगिरितनयाकान्तं
शशधरकलिकोत्तंसम् ।
स्थितिलयजनिकर्तारं
प्रणमत वरदं देवम् ॥ १ ॥

---

१ अतिस्वच्छतरात् अनुत्तरध्रुवपदात् उन्मिषितया स्वस्वातन्त्र्य-शक्त्या कमनीयम्, विश्वसंजीविनी अमाख्या कला उत्तंसो मुख्यमुपकरणं यस्य तादृशम्, सृष्ट्यादिपञ्चकृत्यकरणशीलं, देवं द्योतनादिसतत्त्वं विश्वोल्लासनादिक्रीडापरं च, प्रोत्कृष्टस्वात्मलाभातमवरदं स्वात्मानं समाविशतेत्यर्थः । बाह्यार्थस्तु स्पष्टः । अत्र प्रथमपादे शक्तिमत्स्वरूपप्रधा-

नित्योदितनिजाभासस्फुरत्तानिह्नुतात्मने ।
शिवाय परिपूर्णैकचिद्रूपवपुषे नमः[2] ॥ २ ॥
श्रीमन्महादेवगिरौ वसुगुप्तगुरोः पुरा ।
सिद्धादेशात्प्रादुरासन् शिवसूत्राणि तस्य हि ॥ ३ ॥
सरहस्यान्यतः सोऽपि प्रादाद्भट्टाय सूरये ।
श्रीकल्लटाय सोऽप्येवं चतुःखण्डानि तान्यथ ॥ ४ ॥

---

नतया सामान्यचित्स्वरूपस्य, द्वितीये शाक्तस्वरूपप्राधान्येन सहजविद्योदयस्य, शिष्टे विश्वनाट्योल्लासिरूपमुख्यतया विभूतेर्वर्णनात् वक्ष्यमाणप्रकाशत्रयोपक्षेपणं कृतम् ।

२ सदोदितस्वप्रकाशात् अनवरतं प्रसरद्रूपिण्या स्वाभिन्नोच्छलद्विशदतमनीलादिस्फुरत्तया आवृताकृतेः शिवस्य संकुचिताण्वात्मप्रकटीकरणम्, वस्तुतः तादवस्थ्येऽपि पूर्णसच्चिद्घनभावस्यानपहानिरित्याशयः, अनेन तृतीयप्रकाशे उपक्रमाभ्यासादिषु वक्ष्यमाणसारार्थसर्वस्वं सूच्यते ।

आदर्शपुस्तकविशेषे उपलक्ष्यमाणो गुरुपारम्पर्योपदिष्टार्थस्तु यथा—स्वात्मैव शिव इति, तथा चोपनिबत्स्यते 'तत्रात्मन्येव शिवता सर्वस्याखण्डितैव हि' इति । अथ कथं संसारिणः शिवत्वं ? अत्रोच्यते—विमोहिनीशक्तिवशात् अयमाच्छादित इव भवति, न त्वाच्छादितः परमार्थतः सदा प्रकाशमानत्वात्, तदाच्छादने सर्वव्यवहारोच्छेदः स्यात् तथा च वक्ष्यते

'सा चास्त्यहंतेदन्तादि ज्ञानाभासादिनावृता ।'

व्याकरोत्त्रिकमेतेभ्यः स्पन्दसूत्रैः स्वकैस्ततः ।
तत्त्वार्थचिन्तामण्याख्यटीकया खण्डमन्तिमम् ॥५॥
एवं रहस्यमप्येष मातुलेयाय चावदत् ।
श्रीमत्प्रद्युम्नभट्टाय सोऽपि स्वतनयाय च ॥६॥
श्रीमत्प्रज्ञार्जुनाख्याय प्रादात्सोऽप्येवमावदत् ।
श्रीमहादेवभट्टाय स्वशिष्यायाप्यसौ पुनः ॥७॥
श्रीमच्छ्रीकण्ठभट्टाय प्रददौ स्वसुताय च ।
तस्मात्प्राप्य करोम्येष सूत्रवार्तिकमादरात् ॥८॥
दैवाकरिर्भास्करोऽहमन्तेवासिगणैरितः ।
यस्मादागमविभ्रंशाद्भ्रान्तेर्भ्रमितबुद्धयः ॥९॥
सुकुमारा अतस्तानि सूत्राणि विवृणोमि च ।

---

इति । किं तर्हि तदपसरणकारणम् ? — ईश्वरानुग्रह एव । तथा च

'शक्तिपातवशाद्देवि नीयते सद्गुरुं प्रति'

इति । तत्रानुग्रहे सति स्वस्वरूपं कथितरूपं स्फुटीभविष्यति । तथा तस्य चैवं-विधस्य स्ववशे एव सर्वं भवति । तद्वक्ष्यते

स्वस्वरूपं शिवः साक्षात् ।

इत्यादि ।

---

पं० २ क' पु० टीकायाः खण्डमिति पाठः ।

तत्रात्मन्येव शिवता सर्वस्याखण्डितैवं हि ॥१०॥
सदास्त्यहन्तेदन्तादिज्ञानाभासादिनावृता।
तस्यावृतिविनाशाय स्वरूपज्ञप्तये शिवः ॥११॥
सक्रमज्ञानपूर्वाणि सूत्राण्याह कृपाकुलः।
स्वस्वरूपं शिवः साक्षात्तस्योन्मेषनिमेषतः ॥१२॥

३ स्वात्मैव शिवः चिदात्मा न तु व्यतिरिक्तो वाद्यन्तराभिमत इव, शिवता हि सर्वस्य स्वानुभवसिद्धा परिपूर्णालौकिककार्यकारणात्मैश्वर्याश्रया सर्वविश्रान्तिस्थानं यत्प्रत्यभिज्ञापनायानुक्षणं व्यवहारदशायां भावसर्जनादिकृत्यस्वातन्त्र्यमुपलक्षणं चिदणुषु सहृदयैकावगम्यमस्ति। सैव स्वेच्छाविर्भावितमायाप्रमातृतावशात् इदन्ताज्ञानसंपादितावृतिरिव पुद्गलैरुपलब्धुं न पार्यते, अतस्तद्विज्ञानायानुग्राह्यजनानुजिघृक्षोः श्रीशिवात् सूत्राणामवतारः।

४ तीव्रतरशक्तिपातिनः शांभवज्ञानेन, तीव्रमध्यशक्त्यनुगृहीताः शाक्तज्ञानेन, मन्दशक्तिपातवन्त आणवज्ञानेन ऊर्ध्वोर्ध्वतरादिसोपानाधिरोहणक्रमेण सर्वोर्ध्वपदवीमासादयन्ति इत्यतोऽधिकारिजनापेक्षया सूत्राणां सक्रममुपन्यासः।

५ उन्मेषो नाम शक्तिप्रसरः, निमेषो नाम तत्संकोचः, तन्निबन्धिन्यावेव विशुद्धसंविन्मात्ररूपस्य जगतः चिदिच्छादिकलाचक्रस्य तन्निमित्तस्य शिवादितत्त्वपञ्चकस्य वा खेचर्यादिशक्तिप्रसरणस्य वा सृष्टिस्थिती।

पं० ४ क॰ पु० संक्रामे ज्ञानेति पाठः।

शक्तिप्रसरसंकोचनिबद्धावुदयव्ययौ ।
जगतो ज्ञानदेहस्य कलाचक्रस्य चोद्भवः ॥१३॥
तत्स्वरूपस्योपन्यासे बह्व्यो विप्रतिपत्तयः[६] ।
संस्थितास्तद्व्युदासार्थं शिवः सूत्रमरीरचत् ॥१४॥

**चैतन्यमात्मा ॥१॥**

चैतन्यमात्मनो रूपं सिद्धं ज्ञानक्रियात्मकम् ।
तस्यानावृतरूपत्वाच्छिवत्वं केन वार्यते ॥१५॥१॥

---

तदावृतेरुपन्याससूत्रमाह महेश्वरः ।

**ज्ञानं बन्धः ॥२॥**

---

६ मलप्रतिबन्धतारतम्यात् वादिनां विमतयः सन्ति । तत्र लौकिकाः चैतन्यविशिष्टं शरीरं, नैयायिका ज्ञानादिगुणिनं बुद्धितत्त्वप्रायं, मीमांसकाः पुर्यष्टकं, सौगता ज्ञानसंतानं, केचित् श्रुतिविदः शून्यमभाव-

---

पं० ३ क' पु० तत्स्वरूपउपन्यास इति पाठः ।

पं० ४ ख' पु० शिवसूत्रमिति, ग' पु० शिवसूत्राण्यरीरचत् इति पाठः ।

पं० ८ क' पु० तदावृत उपन्यासेति पाठः ।

अहं ममेदमिति यज्ज्ञानं भेदप्रथात्मकम् ॥१६॥
शब्दानुवेधतो जातं मायीयमलमूलकम्ँ ।
तद्बन्धनं समाख्यातमविद्यावृतिलक्षणम् ॥१७॥२॥

---

शब्दानुवेधने त्वस्मिन्कारणं किमतोऽवदत् ।
सूत्रं पशोर्मोहिकानां कलानां प्रतिपादकम् ॥१८॥

## योनिवर्गः कलाशरीरम् ॥३॥

योनयः शक्तयो ज्ञेयाश्चतस्रः सर्वकारणम् ।

---

ब्रह्मात्मकं, माध्यमिका अप्येवं, पाञ्चरात्रा अव्यक्तं, सांख्या विज्ञानकलावस्थां, केचित् वेदविद ईश्वरतत्त्वं, वैयाकरणाः सदाशिवतत्त्वं, विश्वोत्तीर्णतन्मयतादिस्वभावं त्रिकादिदर्शिन आत्मानं प्रतिपद्यन्ते। सर्वे अमी पारमार्थिकस्वातन्त्र्यवञ्चिता मायया भेदभूमिमापन्नाः।

७ परमेश्वरस्यैव नित्यविभुस्वरूपस्य दुर्घटनासंपादयित्र्या स्वमायाशक्त्या विश्वात्मनाट्योद्भासनाय नटस्येवाकल्पेन स्वात्मैश्वर्यम-

---

पं० १ ग' पु० ज्ञानभेदेति पाठः।

पं० २ ख' पु० मायीयमलपूर्वकम् इति पाठः।

पं० ४ क' पु० शब्दविद्याभिधे त्वस्मिन्कारणे इति पाठः

पं० ५ ग' पु० मोहकीनामिति पाठः।

अम्बा ज्येष्ठाभिधा रौद्री वामा च शिवमूर्तयः ॥१९

तासां वर्गः समूहः स्यात्तच्छरीरं कलासु च।

अकारादिक्षपर्यन्ता कलास्ताः शब्दकारणम् ॥२०॥

मातरः शक्तयो देव्यो रश्मयश्च कलाः स्मृताः।

एताः शब्दानुवेधेन प्रत्ययोद्भासिकाः पशोः ॥२१॥

तेनासौ भोग्यतां याति तासां, स्वविभवं यतः।

तस्य लुप्तं तदुत्थेन ज्ञानाभासेन सर्वदा ॥२२॥३॥

---

ज्ञानाभासस्य तासां च किमाधारो ह्यतोऽवदत्।

**ज्ञानाधिष्ठानं मातृका ॥४॥**

ज्ञानस्यैव द्विरूपस्य परापरविभेदतः ॥२३॥

---

पह्नूय संकोचग्रहणेनाण्वात्मभूमिकामध्यासीनस्य प्रकाशान्वयव्यतिरेकानुविधायितया सत्त्वासत्त्वविकल्पोपहतत्वात् स्वात्मा व्यतिरेकिषु भावेषु अहं ममेदमिति-क्लृप्तशब्दसंबन्धितया भिन्नाभिन्नप्रथात्मकं यज्ज्ञानं तदेव निजैश्वर्यावरणलक्षणाणवमलं बन्धात्मकं मायीयं मलमुक्तमित्यर्थः।

८ सर्वशक्तिकारणात् शक्तिचतुष्कादेव आदिक्षान्तकलाचक्रो-

---

पं० ८ ख' पु० ज्ञानाभासः स तासामिति पाठः।

स्यादधिष्ठानमाधारः शक्तिरेकैव मातृका ॥४॥

———

इत्थमावृतिरूपं यज्ज्ञानं तद्विनिवृत्तये ॥२४॥
व्यक्तये स्वस्वरूपस्य सूत्रमीशोऽभ्यभाषत ।

उद्यमो भैरवः ॥५॥

परिपूर्णस्वरूपस्य शिवस्येत्थं चिदात्मनः ॥२५॥
स्वस्वरूपापरित्यागं कार्यं प्रत्युद्बुभूषतः ।
भाव उद्योग उन्मेष उद्यमः परिभाष्यते ॥२६॥
तदेव जगदाख्यातं शार्वं तत्त्वं च भैरवम् ।
तत्रापि स्वपरिस्पन्दस्फुरत्तायां स भैरवः ॥२७॥

---

दयः, तदेव कलाचक्रं स्थूलं वर्णात्मकं पदवाक्यसंघटनया अशेष-विचित्रलौकिकालौकिकशब्दरूपेण परिणतं पशूनां प्रत्ययजनयितृ, येन विलुप्तविभवास्ते तद्भोग्यभावं यान्ति इति येनय इत्यारभ्य कारिकाचतुष्टयाभिप्रायः ।

१ अभेदाभास-भेदप्रथनभावेन द्विविधज्ञानस्य परापररूपता,

---

पं० ६ ख' पु० प्रतिबुभूषता इति पाठः ।

पं० ८ ग' पु० भौवनमिति पाठः ।

भरणाद्रमणादत्र वमनादपि चोच्यते ।
अखण्डितनिजाभासप्रथनादपि चिद्विभोः[1] ॥२८॥
॥५॥

---

एवमुद्यमिनश्चास्य चिद्वपुर्भैरवात्मनः ।
उन्मेषेऽपि स्वस्वरूपप्रकाशो न प्रहीयते ॥२९॥
इत्युक्त्वापि निमेषस्य यथा न परिहीयते ।
स्वस्थितिस्तत्प्रसिद्ध्यर्थं सूत्रमाह महेश्वरः ॥३०॥

शक्तिचक्रसंधाने विश्वसंहारः ॥६॥

---

उभयविधस्यास्य विश्वजननी शक्तिरेवाधिष्ठात्री, तत्र परज्ञाने अघोराख्या शक्तिः अन्तर्बहिः स्वात्ममयताभासयितृत्वात् । अपरस्मिन् अभेदानुसंधानवैकल्यात् बाह्यौन्मुख्यसंपादिनी घोराख्या शक्तिः शिवताच्छादयित्रीत्यर्थः ।

१० अत्र शांभवोपायौचित्यवशात् तीव्रतरपरशक्तिपातपूतस्वान्तानां सिद्धादिदर्शन-चर्वाद्यभ्यवहारादिनानुग्राह्याणां जनानां जपध्यानाद्यनुष्ठानयन्त्रणानिरपेक्षं भरणरवणवमनात्मकपरमभैरवावेशशालिनाम् अविरतप्रसरज्ज्ञानक्रियात्मशाक्तामृतरसनिःष्यन्दचर्वणात् पुनरपि नवनवामृतरसास्वादशालिनी स्वरूपावेशप्रत्यापत्तिः संजायते । एवमुद्यतानां स्वभावोन्मेषे संवित्प्रकाशावरणाभावः सिद्ध एव ।

---

पं० ४ क' पु० प्रतीयते इति, ख' पु० प्रलीयते इति पाठः ।

शक्तयश्च जगत्कृत्स्नं ताश्च ज्ञानक्रियात्मिकाः ।
वृत्तयः पूर्वनिर्दिष्टास्तच्चक्रं चकनादतः ॥३१॥
तत्संधानं स्वीकरणं स्वात्मन्येव निमेषतः ।
संहारः प्रविलीनत्वं शिवत्वं तेन तस्य तत् ॥३२॥
एवं शब्दार्थरूपादेर्ज्ञानस्योन्मेषसंभृतौ ।
कारणं परमात्मैव भैरवः स शिवस्तदा ॥३३॥

॥६॥

---

स्वस्वरूपपरिस्पन्दादच्युतस्य चिदात्मनः ।
जाग्रदादिविभेदोऽयं स्यादनावरको यथा ॥३४॥
तदर्थमिह देवेशः सूत्रमाह यथार्थवत् ।

**जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंवित् ॥७॥**

---

११ ज्ञानक्रियाशक्तिमयस्य जगतः प्राकाशविमर्शात्मानुत्तररूपात् अपृथक्तया परामर्शने परमसंविन्मयशिवाग्निसाद्भावात्मा

---

पं० २ ख' पु० चक्रं चशनादिति पाठः ।

पं० ८ ग' पु० स्यादवावारक इति पाठः ।

पं० ६ ग' पु० तदर्थमाह इति पाठः ।

पं० १० शिवसूत्रविमर्शिन्यां हि मूलसूत्रपाठः 'तुर्याभोगसंभवः' इत्यस्ति ।

स्वस्वरूपैकघनताविमर्शस्तुर्यभूः स्मृता ॥३५॥
सर्वानुस्यूतरूपत्वाद् गलितभ्रमसंस्थितेः ।
तुर्याभोगाख्यसंवित्सा ह्युपलब्धृस्वरूपता ॥३६॥
स्थितैव जाग्रदादीनां भेदे सर्पत्यपि स्फुटम्[१२] ॥७॥

---

एवमुक्त्वा जाग्रदादिव्यक्तये परमेश्वरः ॥३७॥
सूत्रत्रयमन्ववदज्जीवन्मुक्तत्वासिद्धये ।

ज्ञानं जाग्रत् ॥८॥

---

प्रविलयो भवति, एवं कारणे कार्यस्याविभिन्नभावेन स्थितस्य निमेषावस्थायामपि स्वस्थितिर्नाव्रियते इति भावः ।

१२ स्मृत्याद्यवस्थाः स्वप्नेन मदमूर्छाद्यवस्थाः सुषुप्तेन गृह्यन्ते, अतोऽत्र तिसृणामवस्थानामवस्थान्तराक्षेपिणीनां निर्देशात् न पृथक् तन्निर्देशापेक्षणम् । एवमेषां त्रयाणां विजृम्भमाणे विभिन्नव्यापारे व्युत्थितस्य योगिनः स्वरूपैकघनविमर्शनात् एतदवस्थात्रयकृतपारमार्थिकवस्तुसमावृतिर्नास्ति; तस्मात् समाध्यनुष्ठानप्रयासोऽस्यानुपयुक्तः परिपूर्णस्वरूपेऽवधानस्य विधानानौचित्यात्, अपूर्णे तु पारिमित्यास्पदावधानस्य पूर्णताप्रायकताविरोधात्—इत्ययमाशयः स्वस्वरूपेति कारिकाद्वयस्य ।

---

पं० ४ क' पु० भेदे सत्यपि च स्फुटे इति पाठः ।

पं० ६ ख' पु० पर्यवददिति पाठः ।

बौद्धं गार्वं च साकल्पं शाब्दं स्पार्शं च रूपजम् ॥३८॥
रसजं गन्धजं चान्यदैन्द्रियज्ञानमेव यत् ।
अत्र गृहीतृग्रहणग्राह्यरूपा चिदात्मनः ॥३९॥
स्फुरत्येव ज्ञानशक्तिर्जाग्रद्वृत्तिरिहैव सा ।
पशोः स्वरूपहान्यैव सा वृत्तिः परिभाष्यते[13] ॥४०॥

## स्वप्नो विकल्पाः ॥ ९ ॥

दृष्टिस्वभावस्य विभोरन्तर्नवनवोदयः ।
विकल्पानां स्मृतः स्वप्नस्तद्बाह्यार्थनिरासतः[14] ॥४१॥
पतिभावाद्विकल्पानां दृढतादृढता पुनः ।

---

१३ निश्चयनाभिमानन-संकल्पन-शब्दन-स्पशन-दर्शन-रसनगन्धोपादानात्मकं बाह्येन्द्रियवृत्तिजं ज्ञानं, द्रष्ट्राद्युपाध्युपहिता जाग्रद्वृत्तिः पशूनां स्वात्मव्यवधायिनी, पतीनां तु स्वरूपस्फूर्तिदायिनीत्यर्थः ।

१४ बाह्यार्थाभावे तद्वृत्त्युपशान्तौ बाह्यार्थनिरपेक्षमन्तर्विसृत्वराणां पुरगिरिवनोपवनाद्युल्लेखवैचित्र्येणाभासमानानां स्वार्थक्रियाकारिणां विकल्पानां नवनवाविर्भावः स्वप्नः पशोः स्वरूपामावृणोतीत्यर्थः ।

---

पं० १ ख० पु० बौद्धं सौगतसांकल्पमिति पाठः ।

पं० ८ क० पु० बाहयार्थनिरासनमिति पाठः ।

पशुत्वादावृतिः सैव ज्ञेया शक्त्यात्मनः प्रभोः ॥४२॥

## अविवेको मायासौषुप्तम् ॥१०॥

ज्ञानज्ञेयस्वरूपायाः शक्तेरनुदयो यदा ।
चिद्रूपस्याविवेकः स्यादसावेवाविमर्शतः ॥४३॥
सैव मायावृतिजालपोषकत्वात्प्रकीर्तिता ।
अर्थस्मृती स्वात्मसंस्थे चिद्रूपे सा सुषुप्तता ॥४४॥
पत्युरेवं स्वविश्रान्त्या पशोरावृतिरूपतः ।
इत्थं तिस्रास्त्रिप्रकाराः प्रत्येकान्योन्ययोगतः ॥४५॥
मुख्यगौणत्वभेदेन ज्ञेयाः सम्यक् चिदात्मनः ।
एवं ज्ञानज्ञेयमयः पतिरत्र पदद्वये ॥४६॥
सुषुप्ततुर्ये त्वन्यस्मिंश्चिन्मयश्च विभुः स्मृतः[१५] ॥
॥८–१०॥

---

१५ उभयत्र वेद्यवेदनात्मतया विलसन्त्याः शक्तेः विरत्या किरणसंहृत्या रवेरिव चिद्रूपस्यात्मनोऽनवभासनं सा आवरणजालमयी मायात्मिका सुषुप्तिः, यत्रार्थतत्स्मृती अव्यवहितस्वात्ममात्रसंस्थे, न तु तस्याप्यसत्ता तद्व्युत्थितस्य सुखस्वापाकिंचिज्ज्ञानयोः स्मृत्यनुपपत्तेः । एवमासु तिसृषु दशासु पतिपश्वोः स्वरूपावभासानवभासनं स्वभावसिद्धम् इति ज्ञानेत्यादिपद्यजातस्याभिप्रायः ।

अथासामेव तिसृणामवस्थानां गुणत्रयम् ॥४७॥
स्थितमेवानुषङ्गेण तदर्थं सूत्रमुक्तवान् ।

त्रितयभोक्ता वीरेशः ॥११॥

सत्त्वं रजस्तमश्चेति त्रितयं गुणसंज्ञितम् ॥४८॥
अवस्थानुगुणं तद्धि स्वस्वरूपादुदेत्यलम् ।
आच्छादकं पशूनां तत्स्वस्थितेस्तु विभोः पुनः ॥४९॥
सर्वानुस्यूतरूपत्वात्स्वरूपाच्छादनं न तत् ।
इत्थमेवं गुणस्पन्दनिःष्यन्दानां च चिद्वपुः ॥५०॥
भोक्ता स्वीकरणात्प्रोक्तः प्रसरस्य विभुत्वतः ।
अत एव हि वीरेशः स्वप्रकाशैकवृत्तितः[१६] ॥५१॥
एवं मरीचिनिचयो गुणत्रयसमुद्भवः ।
वैकल्पिके जगत्यस्मिन्वमनग्रासतत्परः ॥५२॥
तत्रापि ग्रासकृद्यस्मात्तेन वीरेश्वरः स्मृतः ॥११॥

---

१६ गुणसाम्यावस्थात्मप्रकृतितत्त्वोत्पन्नानां सत्त्वादीनां गुणानामेकैकप्राधान्यात् त्रिविधस्य जाग्रदादिदशात्रयस्य प्रकाश-प्रवृत्ति-मोहमयस्य स्ववैभवप्रसरणात्मतया चमत्कर्तृत्वाद्वीरेशः प्रोच्यते इत्यर्थः ।

---

पं० ६ क' पु० आधारगमिति, ग' पु' आवारकमिति पाठः ।

एवं स्वस्य स्वभावस्य व्युत्थानेऽपि यथा स्थितिः ५३
स्वका न प्रच्यवत्यस्य तदर्थं सूत्रमादिशत् ।

विस्मयो योगभूमिकाः ॥१२॥

एवं सर्वस्य सर्गादेः कारणं चिद्वपुः प्रभुः ॥५४॥
तदधिष्ठितमेवेदं जगत्समवलोकयन् ।
विस्मयाविष्ट इव यस्तिष्ठति प्रतिभानवान् ॥५५॥
तस्य बिन्द्वादिभावौघसंबन्धाद्विस्मयोदयः ।
समाधिव्यक्तयस्ताः स्युर्या एता योगभूमयः[१७] ५६॥१२॥

---

एवमस्याप्रतिहता सर्वेच्छा च विजृम्भते ।
तदर्थं भगवान्सूत्रमभ्यभाषत शंकरः ॥५७॥

इच्छाशक्तितमा कुमारी ॥१३॥

---

१७ वेद्यवस्तुजातामृतरससारचर्वणे चिद्घनस्वात्मावेशसद्भावात् विकसिताकृत्रिमकरणैः स्वात्मविभूतिं नित्योदितविकसितां पश्यतोऽस्य योगिनोऽपूर्वालौकिकविस्मापकवस्तुदर्शनात् या आश्चर्यायमाणता बिन्द्वादिस्थानावधानपरिशीलनादिवर्जं संजायते सा परतत्त्वभूमिका-

---

पं० ११ 'इच्छा शक्तिस्मा' इति विमर्शिनीस्थः पाठः ।

सर्वातिशायिनी शक्तिरिच्छैव परमात्मनः ।
सर्वदृक्कर्तृतायोगात्कुत्सावस्थातिमारिणी ॥५८॥
निरावरणचिद्रूपसमावेशाद्भवत्यतः ।
तदेव कारणं तस्य सर्वत्राखण्डितं विभोः[१८] ॥५९॥१३॥

---

एवं सर्वात्मकस्यास्य किमेकं देहिदेहवत् ।
शरीरमुत वा सर्वमत्रोवाच सुरेश्वरः ॥६०॥

दृश्यं शरीरम् ॥१४॥

सर्वभावोद्भवस्यास्य सर्वबीजात्मनः प्रभोः ।

---

धिरूढिज्ञापिका, बिन्द्वादिभावौघसंबन्धादिति ल्यब्लोपे अपादान-विभक्तिः ।

१८ निखिलशक्तिगर्भिण्या इच्छाशक्तेर्योगादेवास्य सर्वत्र दृश्यमये जगति अप्रतिहतं स्वातन्त्र्यं समस्ति, यद्यथेच्छति तथा प्रथते। येन विश्व-मनाश्रितादि पृथ्व्यन्तं स्वाङ्गकल्पं निरावरणचिद्घनरूपं प्रस्फुरेत् इत्यर्थः ।

१९ सर्ववेद्याकारः परमशिव एव स्फटिक इव स्वप्रतिफलितानां स्वाधिष्ठानानां क्वचित् संकुचितभूमिकायामपि बहिरन्तः सतां भावानां व्यापित्वात् तत्प्रकाशसत्ताप्रदान-तत्स्थित्यन्यथानुपपत्तिसद्भावेन जीवित-देशीय इति सूत्राशयः ।

चिद्रूपस्य व्यापकत्वान्नैकं तस्य शरीरकम् ॥६१॥
तन्न बाह्यार्थ एवास्य यो यो दृश्यो विकल्पजः ।
स स देहो व्यापकत्वात्सर्वभावोद्भवत्वतः ॥६२॥
स्ववर्गचित्स्वरूपेण तादात्म्यात्सर्वदेहभृत् ।
शरीरव्यतिरेकेण दर्पणप्रतिबिम्बवत् ॥६३॥
दृश्यं यस्य व्यापकत्वात्स मोक्षश्रीनिकेतनम् ॥१४॥

---

उक्त्वैवं ज्ञानसद्भावस्तद्योगश्च कथं भवेत् ॥६४॥
स्वहृन्मन्दिरगस्यास्य तदर्थं सूत्रमाह च ।

**हृदये चित्तसंघट्टाद्दृश्यस्वापदर्शनम् ॥१५॥**

[२०] आधारभूते हृदये चेतसः स्थित्युपग्रहः ॥६५॥

---

२० सर्वेन्द्रियनाडिसंततीनामधिष्ठानभूते हृदि ऐहिकामुष्मिकेभ्यो बाह्यार्थेभ्यो विरज्योपरतस्य चित्तस्याभ्यासादिनावधानात् दृश्यानर्थविलयः । यद्वा शुद्धाशुद्धाध्वनोरूर्ध्वाधस्तनयोरवधिकल्पतया स्थितं सौषुप्तं व्योम हृदयमुच्यते, तत्र वृत्तिविलयनात् औषण्याभावे वह्नेरिव मनसोऽपि लयः । तस्मिन् निर्मनस्के अतेजस्तमोमये ( यत्र

---

पं० २ क॰ पु० तेन बाह्यार्थ एवेति पाठः ।

पं० ७ क॰ ग. पु० उक्त्वेति ज्ञानसद्भावं तद्योग इति पाठः ।

पं० ८ क॰ पु० सुहृन्मन्दिरगम्यस्येति पाठः ।

संघट्ट इष्यते तेन स्याद्दृश्यस्वापदर्शनम् ।
सौषुप्तं व्योम हृदयं मध्यस्थत्वात्प्रभाष्यते ॥६६॥
अत्रात्मनः समाधानं यत्संघट्टः स चेतसः ।
तदुत्थवृत्तिजालस्य स्वात्मन्यैक्यादुदीरितः ॥६७॥
शरीरापेक्षया तस्मिन् व्योम्नि लीनो यदा तदा ।
ब्रह्मक्षत्रवधस्तस्य स्थित एवानुषङ्गतः ॥६८॥
दृश्यं स्यादुपलभ्यं यन्निरावरणलक्षणम् ।
स्वस्वरूपं प्रबुद्धं तत्तत्प्राप्तिर्दर्शनं स्मृतम् ॥६९॥
स्वापकारस्य मोहस्य हानावत्र च दर्शनम् ।
दिव्यमुद्रासमावेशात्प्रबुद्धः सर्वदा विभुः ॥७०॥
अप्रबुद्धमतेस्तस्य स्यात्स्वापस्यैव दर्शनम् ।
सोमपानात्प्रबुद्धस्य स्वप्नस्वातन्त्र्यमेव तत् ॥७१॥

---

देहाद्यहन्ताभावात् तदपेक्षिब्रह्मक्षत्रशब्दोपलक्ष्यमाणयोः वेदाध्ययन-व्यवहारव्यवस्थापनकर्मणोरानुषङ्गिकी निवृत्तिः) तुरीयाकाशे अव्य-वहितस्वस्वभावस्योपलब्धिः, जन्ममरणादिसंसारानर्थमूलाज्ञाननिवृ-त्तिश्च । अप्रबुद्धमतेस्तु तत्र स्वापानुभव इति आधारभूते इत्यादीनां सूत्रार्थज्ञापककारिकाणां संग्रहाशयः ।

---

पं० २ क॰ पु० सौषुम्णं व्योमेति, ग॰ पु० सौषुप्त्यमिति पाठः ।

तमोवरणनिर्भेदः सोऽयं च प्रतिभोदयः ॥१५॥

---

अन्तर्बहिर्विचार्यैव स्वरूपं तद्द्विवर्जनात् ॥७२॥
अखण्डमण्डलाकारं परिपूर्णं करस्थितम् ।
तदर्थं शिवशक्त्यात्मभेदे स्थितिर्यथा स्थिता ॥७३॥
स्वालोकश्च न हीयेत प्राह सूत्रत्रयं विभुः ।

शुद्धतत्त्वसंधानाद्वा[21] ॥१६॥

शुद्धं निरुपधि ज्योतीरूपं तत्त्वं शिवाभिधम् ॥७४॥
तत्संधानं तदात्मत्वविमर्शस्तेन वा भवेत् ।
तमोवरणनिर्भेदः परिपूर्णैकरूपतः ॥७५॥
बाह्याहंभावसंत्यागादखण्डितनिजस्थितिः ॥

इति शिवचैतन्यनिरूपणम् ॥

---

२१ अत्र विश्रामभूमिसंज्ञकस्य परानदात्मशिवचैतन्यस्य निरूपण-पूर्वकमुपायकथनम् ।

---

पं० ५ क' पु० स्वो लोकश्चेति पाठः ।

पं० ६ विमर्शिन्यां तु मूलशिवसूत्रेषु 'शुद्धतत्त्वसंधानाद्वाऽपशुशक्तिः' इत्येकसूत्रात्मा भेदविशिष्टश्च पाठोऽस्ति । अस्मिन्ग्रन्थे 'शुद्धतत्त्वसंधानाद्वा इति, 'स्वपदशक्तिः' इति च विभक्तसूत्रद्वयात्मा पाठः एतद्ग्रन्थकृता संव्याख्यातोऽस्ति ।

पं० १० क' पु० निजस्थितेः इति पाठः ।

## स्वपदशक्तिः ॥१७॥ [22]

स्वपदं सत्पदं ज्ञेयं शिवाख्यं यदुदीरितम् ॥७६॥
तद्वीर्यं दृक्क्रियारूपं यत्सा शक्तिः प्रकीर्तिता ।
तस्याः कर्त्रंशसंवेशो लीनता स्यात्स्थितिश्च सा ॥७७॥
तदेव प्रतिभालोकः स्यात्प्रकाशैकमन्थरः ॥

इति शक्तिचैतन्यनिरूपणम् ॥

## वितर्क आत्मज्ञानम् [23] ॥१८॥

उपाध्युपाधिसंभेदे विवेकः प्रत्यवेक्षणम् ॥७८॥
स वितर्कः स्वस्वभावविमर्शैकघनात्मनः ।
आत्मनः शिवरूपस्य प्रत्यभिज्ञाप्रसाधने ॥७९॥

---

२२ अस्मिन् परानन्दात्मलाभभूमिसंज्ञकशाक्तचैतन्यनिर्देशः संव्याख्यातोऽस्ति ।

२३ अनेन प्रोल्लासभूमिसंज्ञकात्मचैतन्यध्वननपुरःसरम् स्वालोकस्य प्राप्त्युपायो निरूप्यते ।

---

पं० २ ग' पु० 'सत्पदशक्तिस्थितिः' इत्येवंविधोऽत्र सूत्रपाठविशेषश्चास्ति ।

परं तत्साधनं ज्ञेयं तस्मिन्सत्यात्मवेदनम् ।
तस्माद्वा प्रतिभोन्मेषः स्याच्छुद्धस्यात्मनः परः ॥८०॥

इति आत्मचैतन्यनिरूपणम् ॥

निरानन्द-परानन्द-महानन्दस्वरूपकम् ।
शिवशक्त्यात्मचैतन्यत्रयमेतन्निरूपितम् ॥८१॥
विश्रामलाभप्रोल्लासभूमिसंज्ञं त्रयेण च ।
सूत्राणां............ ॥१६-१८॥

---

.......पुनरप्याह यथास्य प्रतिभोदये ॥८२॥
स्वरूपलाभसौख्यैक्यप्रकाशैक्यं कचत्यलम् ।

## लोकानन्दः समाधिसुखम्[२४] ॥१९॥

चित्प्रकाशः परः शुद्धश्चान्तर्बहिरिवोदितः ॥८३॥
नित्यः सर्वात्मकः सर्वः सर्वभावोद्भवो विभुः ।
स लोक इति विज्ञेयः स एवानन्द उच्यते ॥८४॥
चित्प्रकाशैककचनं निर्यन्त्रणस्फुरद्वपुः ।

---

२४ स्फुरितस्वात्मस्फूर्तेर्योगिनः स्वरूपलब्धिसुखं, विश्वत्र भावेषु प्रकाशैक्यकचनं च प्रोक्तोपायसेवनात् झटिति प्रस्फुरतीत्याशयः ।

तदास्वादैकतानत्वात्समाधिसुखमीर्यते ॥८५॥
यद्वा ग्रहीतृग्राह्यैकवर्गप्रसरणात्मके ।
पदद्वये स्वप्रमोदस्तत्समाधिसुखं स्मृतम् ॥८६॥१६॥

---

एवं स्वतन्त्रस्य सतः स्वेच्छाकर्तृत्वसूचकम् ।
सूत्रं प्रोवाच भगवानकृत्रिमफलोदये ॥८७॥
यतः क्रियात्मिका शक्तिर्बन्धयित्री पशुष्वतः ।

## शक्तिसंधाने शरीरोत्पत्तिः[२५] ॥२०॥

शक्तिमान्निरुपादानः सच्चिद्रूपः प्रकाशकः ॥८८॥
अन्तःस्थितानां भावानामिच्छयैव बहिर्यतः ।

---

२५ शक्तिरूपाणां भावानां निरुपादानादिसामग्रीजातं स्वभित्तावेव निर्भासनाद्धेतोः शक्तिमांश्चित्स्वरूप एव स्वेच्छया स्वात्मनि प्रकाशैक्येन स्थितमर्थजातमुन्मीलयति, अतः प्रागुक्ततत्स्वातन्त्र्याख्यशक्तिं तादात्म्येन परामृशन् स्वतन्त्रोऽयं योगी यथेच्छममरादिविलक्षणां कायसंभूतिं रचयतीत्यर्थः ।

---

पं० ३ निर्यन्त्रणेत्याद्यारभ्य स्मृतमित्येतत्पर्यन्तं पादोनपद्यद्वयं पुस्तकान्तरेष्वविद्यमानं ग' पुस्तकाश्रयेण पूरितम् ।

पं० ४ ख' पु० तस्य स्वतन्त्रस्येति पाठः ।

पं० ८ क' पु० चिद्रूपोऽर्थप्रकाशक इति पाठः ।

इच्छाज्ञानक्रियापूर्वाः शक्तयः पञ्च संस्थिताः ॥८९॥
ईशान्यापूरणी हार्दी वामा मूर्तिश्च ता मताः ।
अन्या विज्ञानदेहाख्या आसामेवानुगाः स्मृताः ॥
प्रक्रियादेहनिर्माणमासां संधानमुच्यते ॥९०॥
तस्मिन्सति शरीरस्य यस्य यस्य यथा स्थिता ॥९१॥
स्यादुत्पत्तिस्तथा तिर्यङ्नरामरविलक्षणा ।
इत्थं कर्तृत्वमेवास्य सर्वत्राक्षय्यखण्डितम् ॥९२॥
सत्यालोकेऽपि कार्यस्य क्षयित्वं च निरूपितम् ॥२०॥

---

स्वातन्त्र्यात्पुनरस्यैव विभवप्रतिपादकम् ॥९३॥
अवोचद्भगवान्सूत्रं स्वेष्टक्रीडानिरूपितम् ।

भूतसंधानभूतपृथक्त्वविश्वसंघट्टाः[२६] ॥२१॥

---

२६ य एष चिदात्मनः शुद्धाध्वोपादानभूतो विशदतमश्चिदानन्देच्छाज्ञानक्रियाशक्तिनिचयः स एवाधस्तनाध्वनि पञ्चकपञ्चकात्मना तत्त्वक्रमावतरणनिबन्धनम्, तद्यथा आकिंचन्यदशावभासने संकुचिततया स्वशक्त्या मायाभावमाश्रितया चिदात्मा पुंस्तत्त्वभूमिकामापन्नः। शक्तिनिचयस्तु तद्दशौचितीपरिमितवैभवोपभोगायकञ्चुकीभूतः। तदनु तदधरतत्त्वजालसंतानाय त्रिशक्तिच्छायोपजीविन्या तया गुणपरिणत्युन्मिषत्तया तत्साम्यावस्थां प्रकृतिमध्यासीनया पुर्यष्टकभावसमापत्तिः।

शब्दशक्त्याद्यवयवैः खादिभूतविनिर्मितिः ॥६४॥
संधानमुक्तं तत्तेषां मूर्तिभेदविवक्षया ।
प्रतिभूतं च भूतं च स्वसत्तैक्यं विविक्तता ॥६५॥
पृथक्त्वमुच्यते तद्धि कर्त्रंशप्रवरो यतः ।
वृत्त्याह्लादप्रकाशाख्यस्पर्शानुभवभूजुषः ॥६६॥
ज्ञेयौ ज्ञानक्रियेऽर्केन्दू यजमानस्य चिद्विभोः ।
चतसृभिस्तथाभूत-विश्वसंघट्ट इष्यते ॥६७॥
प्रतिमूर्तिक्रियायोगं कचनं चिद्विभोरतः ।
एतावद्विश्वमेवेह यदष्टकसमागमः ॥६८॥२१॥

---

इच्छादित्रितयोपादानानि मनोबुद्ध्यहंकृत्तत्त्वानि, शक्तिपञ्चकानुषङ्गेनैव ज्ञानशक्तिप्राधान्यात् धीन्द्रियाविर्भावः, क्रियाशक्तिप्राधान्यात् कर्मेन्द्रियोत्पत्तिः; बहिरपि स्थूलभावेन अर्थैः सह तदुत्पादः । इत्थं भिन्नभिन्नप्रकारेण विश्वरचना, तथा तेषु तत्त्वेष्वनुगतमेकं सामान्यप्रकाशस्वरूपं भिन्नेष्वभिन्नं विलक्षणं पुर्यष्टकभूमिकासंश्रित्या विश्वनाट्यनिर्वहणं चास्य चिदात्मनः स्वेष्टक्रीडनविस्फुरितं निरूप्यते इति ।

---

पं० ३ ख॰ पु० स्वमर्थैक्यमिति पाठः ।
पं० ६ क॰ पु० यजमानश्च चिद्विभुः इति पाठः ।
पं० ७ क॰ पु० तथा भूतैर्विश्वेति पाठः ।

कथं सर्वस्य जगतः कारणं शक्तयस्तथा ।
आत्मनस्तत्प्रभुत्वं स्यात्तदर्थं सूत्रमुक्तवान् ॥९९॥

शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः ॥२२॥

शुद्धं निरुपधि ज्योतिः सर्वाभासावभासकम् ॥१००॥
तस्यानन्तार्थस्रष्टृत्वात्परस्वातन्त्र्यधर्मिणः।
वेदना वर्णिता विद्या सर्वाहंबोधरूपिणी ॥१०१॥
तस्योदयस्तत्प्रथनं तस्माच्चक्रेशलक्षणा ।
सिद्धिर्भवति विश्वत्र माहेश्वर्यविकस्वरा[२७] ॥१०२॥
॥२२॥

---

२७ विश्वमयानुत्तरचिद्घनपरमशिवस्य स्वात्मनः साक्षात्करणात् परापरस्वातन्त्र्यमासाद्य योगिनः परममाहेश्वर्यविकस्वरतच्छक्तिसमापत्त्या अणिमाद्यष्टैश्वर्यात्मिकानां चक्रेश्वरीणामीश्वरताप्राप्तिः । यत्र अणिम्ना स्वेच्छया सद्य एव अवयवापचयेन देहसौक्ष्म्यसंपादनात् परमाणुष्वपि समावेष्टुं शक्तता । लघिम्ना गरिष्ठवपुषः इषीकातूलवत् वायुस्कन्धेषु संचारः । महिम्ना महत्परिमाणत्वम् । प्राप्त्या भूमिष्ठस्या-

---

पं० ४ क' ख' पु० ज्योतिः सर्वाभासेत्यादिकपदजातं तत्प्रथनमित्यन्तं नाभूत्, ग' पुस्तकादुपन्यस्तम् ।

पं० ८ क' पु० सिद्धिर्भवति चक्राख्येत्येवं रूपः, माहेश्वर्येति-पादहीनश्च पाठः ।

इत्थं सति कथं मन्त्रवीर्यसंविद्भवत्यतः ।
सूत्रमाह महावीर्यस्वरूपप्रतिपादकम् ॥१०३॥

महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः[२८] ॥२३॥

चिदात्मैव परः शुद्धः शक्तिमच्छक्तिविग्रहः ।
सृष्टिस्वभावो भावानामुद्भवे परमैव भूः ॥१०४॥
दिक्कालकलनाहीनो ह्यनवच्छिन्नसंततिः ।
महाह्रदसमानत्वात्स महाह्रद उच्यते ॥१०५॥
तदकृत्रिममाख्यातं बलमात्मनि तत्र च ।

---

प्यवयवोपचयेनाङ्गुल्यग्रदैर्घ्यात् चन्द्रादिस्पर्शनम् । प्राकाम्येन इच्छानभिघाततया उदक इव भूमावपि निमज्जनोन्मज्जनयोर्नास्य रूपं भूतरूपैर्विहन्यते । वशितया सर्वभूतान्यादेशकारीणि भवन्ति । ईशितृतया भूतानां प्रभवाप्ययव्यूहानामीष्टे । यत्रकामावसायितया यथासंकल्पं भूतप्रकृतीनामवस्थानम् इति ।

यद्वा चक्रं संविद्देवीरूपं ब्राह्म्यादिशक्तिचक्रं, तदीश्वरत्वेनास्य प्रातिभादयो योगशास्त्रप्रसिद्धा ज्ञानप्रकर्षा जायन्ते, इत्यखण्डितैश्वर्यपरिपूर्णश्चक्रेश्वरो विराजते इत्याशयः ।

२८ शक्तिमच्छक्तिसंघट्टस्यैव उत्पत्स्यमानविसर्गप्रसरणाधारानवगाह्यस्वभावतया महाह्रदोपचारः । तदन्तःसारसर्वस्वभूतः स्वसंवेद्योऽहंपरामर्शमयो निरपेक्षोऽविकल्पमहामन्त्रमणिः ( यत् विश्वावष्टम्भक-

द्दगानन्दारणीसारमध्यस्वरसलक्षणः ॥१०६॥
विकस्वरोन्मिषत्तात्मशाक्ताख्येन बलेन च ।
सोमांशे स्थैर्यलाभः स्यात्तदुदानप्रवेशनम् ॥१०७॥
अनुसंधानमेतत्तेन तत्र स्थितिर्यदा ।
तदा गर्भीकृताभीष्टवेद्याकारनिजस्थितिः ॥१०८॥
सम्यगुच्छूनतारूपोल्लसिताङ्कुररूपकः ।
प्रोन्मेषः सूक्ष्मवाग्रूपः सोऽनभिव्यक्तवर्णकः ॥१०९॥
ककारार्धवृत्तियोगाद्भवेन्मन्त्रोदयः स्फुटम् ।
स एव वीर्यानुभवो मान्त्रः साधकसिद्धिदः ॥११०॥
॥२३॥

---

सामान्यचित्प्रकाशैकस्वरूपप्रतिपादकम् ।
शिवसूत्रप्रकरणं समाप्तमिदमादिमम् ॥१११॥

---

मादि-मान्त्यरूपमसामान्यं वीर्यं तदुपभोगपात्रैः महायोगिभिरेवास्वाद्यते प्रोक्तरूपानुसंधानात्) परावाग्रूपो गर्भीकृतानन्तवाच्यवाचकात्मा प्राप्यस्थानीयं विश्रान्तिधामेत्यर्थः ।

---

पं० १ क० पु० मन्त्रः साधकेति पाठः ।

अतः परतरं मान्त्वं स्वरूपमुपवर्ण्यते ।
वक्ष्यमाणप्रकरणे विद्योदयसमन्वितम् ॥११२॥

इति श्रीमद्भट्टदिवाकरात्मज-श्रीमदाचार्य-भट्टभास्कर-
विरचिते शिवसूत्रवार्तिके सामान्यचित्प्रकाश-
स्वरूपनिरूपणाख्यः प्रथमः प्रकाशः ॥१॥

---

अथ

# सहजविद्योदयाख्यः

## द्वितीयः प्रकाशः

उक्तक्रमेण शिवतां सर्वज्ञानक्रियावतः ।
उपपाद्यात्मनस्तत्र मान्त्रं वीर्यं च यादृशम् ॥१॥
पुनराहात्र वक्तव्यं मान्त्रं स्वं रूपमेव यत् ।
कोऽसौ मन्त्रो यस्य वीर्यं तदर्थं भगवानजः ॥२॥

**चित्तं मन्त्रः[1] ॥१॥**

---

१ उक्तोपायः तीव्रतरादिशक्तिपातवतां सुप्राप्यः । मन्दशक्तिपात-वतां तु मन्त्रवीर्यं समापत्तुं पौनःपुन्येन श्रुतस्मरणादिवशात् अस्फुट-तादिक्रमेण स्फुटतमत्वाद्यापत्तिपर्यन्तं विकल्पसंस्करणात् मन्त्रादिनि-भालनात्मकमुपायान्तरं ( येन परस्फुरत्तासंवेदन-भेदप्रथनोपशमने सहजविद्योदयः ) उपेयपदप्राप्तये आरभ्यते । चिदेव प्राक् विश्वक्रीडन-प्रारिप्सायां निजाकालकलितचिन्मयपदवीतः अधोभुवमवतरन्ती परि-मितभावपरिग्रहणपुरःसरमुल्लासितसंकुचितचेत्यं प्रति औन्मुख्यं गृह्णाना चित्तमिति प्रोच्यते । सैव पुनः स्वपदारुरुक्षायां सोपानाद्यधिरोहण-

चित्तमेव शिवो ज्ञेयः प्रमाता निरुपाधिकः ।
सर्वज्ञतादिगुणवान् दिक्कालकलनोज्झितः ॥३॥
स्वात्मानुभवधर्मित्वात्स मन्त्र इति गीयते ॥१॥

---

तत्कथं योगिनां सिद्ध्येत्तदाह परमेश्वरः ।

प्रयत्नः साधकः ॥२॥

चि[२]त्तरूपसमावेशे प्रयत्नोऽतिशयः स्मृतः ॥४॥
पूर्वोक्तवीर्यवृत्त्यासौ पुनरुक्तनिभालनात् ।
स एव साधकस्तत्र प्रकृष्टः परिकीर्तितः ॥५॥

---

क्रमेण पारिमित्यमुज्झती ईशनशीला चित्प्रकाशघनशिवतामयी संपद्यते । अतः तन्मनो वेद्यमुपसंहृत्यान्तर्मुखीभावेन स्वतन्त्रत्वात् स्वं महः परामष्टुं पर्याप्तं, तत्परामर्शनधर्मित्वात् चित्तमन्त्रयोरभेदोपचारः ।

२ भूयो भूयो बाह्यवृत्तिसंहरणात् ज्ञात्रादिभिन्नसंवेदनविलयपूर्वं प्रोक्तमन्त्रस्वरूपात्मस्येयाकारतादात्म्यप्रत्ययैकताननतायाः प्रवहद्रूपत्वमेव साध्यप्राप्तौ प्रकृष्टोपकारकमित्यर्थः ।

---

पं० ४ तत्कथमिति पद्यार्धं पुस्तकान्तरेष्वविद्यमानं ग· पुस्तकात्प्रक्षिप्तम् ।

चित्तत्त्वमात्मनः सिद्धं वक्ष्यमाणनयेन च।
त्रिकसारे षट्सहस्रे शिवेनैव निरूपितम् ॥६॥
चिच्छक्तेः स्वस्वभावो यः स मन्त्रः परिगीयते।
यन्नैरन्तर्यमननाद्योगी रूढशिवावनिः।
यद्वशात्परमार्थज्ञा योगिनो योगचिन्तकाः ॥७॥ २॥

---

एवमादिश्य भगवान्वाचकानां स्वरूपकम्।
वाच्यवाचकयो रूपमभिन्नं भेदयोगि वा ॥८॥
स्यात्तदर्थं प्राह सूत्रं स तदर्थप्रकाशकम्।

विद्याशरीरसत्ता मन्त्ररहस्यम् ॥३॥

शुद्धे चिन्मात्रतावेशादुन्मेषः सहसैव यः ॥९॥
स्वप्रकाशविकासाख्या सा विद्येति निरूपिता।
शरीरसत्ता सा मान्त्री रहस्यं परमं च तत् ॥१०॥
॥३॥

---

२ इत्थं मन्त्रवीर्यप्रविविक्षायां साधकस्य भेदास्पदतया प्रकाशमानो वाचकात्मा मन्त्रः स्वव्यापारसमन्तरम् अशेषविश्वाभेदमयेन पूर्णाहंविमर्शनसारस्फुरणात्मना वाच्येनाभिन्न एव। 'प्राक्संवित्प्राणे परिणता' इत्युक्तनीत्या बिन्दुस्वरूपिणी परावाङ्मयी शक्तिः क्रिया-

एवं स्थिते रहस्येऽर्थे मन्त्ररूपे यथायथम् ।
एष्टव्यो देहिभिर्मान्त्र उदयः परमोदयः ॥११॥
कथं स्यादत्र च विभुः सूत्रमाह यथार्थवत् ।

गर्भे चित्तविकासो विशिष्टोऽविद्यास्वप्नः ॥४॥

प्रकाशानन्दसारान्तर्व्यावर्तनबलाद्भृशम् ॥१२॥
विषयेभ्यो निवृत्तस्य मनसश्चिन्मयी स्थितिः ।
परो विकासश्चिच्चन्द्रचन्द्रिकामृतनिर्भरः ॥१३॥
स्रवच्छाक्तामृतापूराप्लुतानन्दिजगन्मयः ।

---

शक्तिस्फारमयनादरूपेण सूक्ष्मप्राणतामाश्रित्य परनादगर्भा चित्प्रकाशस्य प्राधान्येन अनुदितवाच्यवाचकक्रमां पश्यन्तीरूपतामुन्मील्य, तदनु बुद्ध्याधिष्ठानां क्रमस्य स्फुटास्फुटतया मध्यमां, ततोऽपि करणप्रधानां वैखरीं च स्फुटक्रमां प्रोन्मीलयति-इत्येतावतः प्रसरक्रमस्य प्राच्यतररूपानुगततया प्रकाशमानतान्यथानुपपत्तेः परतरवाच्याभिन्नमेव मन्त्रचक्रमित्यर्थः ।

---

पं० १ क॰ पु० 'एवं स्थिते यस्य यस्य मन्त्ररूपो यथायथम् ।
तथा स देहिभिर्मान्त्र उपायः परमोदयम्' इति पाठोऽस्ति ।

पं० ४ शिवसूत्रविमर्शिन्यां हि 'गर्भे चित्तविकासोऽविशिष्टविद्यास्वप्नः' इत्येवंविधः पाठोऽस्ति ।

पं० ६ 'विषयेभ्य' इत्याद्यारभ्य 'विलोपनम्' इत्यन्तं सार्धपद्यद्वयं ग॰ पुस्तकात्संगृहीतम् ।

तत्सद्भावादविद्यायाः प्रथयन्त्या धरादिभिः ॥१४॥
तत्त्वजालैरलंग्रासयुक्त्या स्वप्नो विलोपनम् ।
तदेवं सति विद्यैव यथावत्प्रतिपादिता ॥१५॥
सोपायेयमतः सर्वमन्त्रमुद्रास्वरूपिणी ॥४॥

---

मान्त्रं वीर्यं तत्स्वरूपं तद्विमर्शं तथोदयम् ॥१६॥
प्रतिपाद्य पुनर्मुद्रावीर्यार्थं प्राह शंकरः ॥

**विद्यासमुत्थाने स्वभाविके खेचरी शिवावस्था॥५॥**

स्वालोकलक्षणा शुद्धा यैव विद्या निरूपिता ॥१७॥

---

४ मान्त्रोदये चित्तस्य प्राकृतस्वभावविनाशेन तद्गुणापादितानां तिसृणामवस्थानां स्वरूपविप्रलोपात् अत्युन्नतपरपदावेशारूढिरुपायः। एवं वीर्यलाभे सति मन्त्रान्तराणां तत्संजीवितानामधिकार्यसमृद्धौ शक्त्याधानं प्रयोज्यते, अन्यथा औत्तराधर्येण स्थितयोरात्मशिवयोर्मन्त्र-नियोजना जाड्यनैष्फल्यमादधना वैयर्थ्यमियादिति भावः।

५ यया परचिदाकाशे योगी चरति सा खेचरी मुद्रा, साक्षात् शिवावस्थैव। अत्र मुद्रामन्त्रवीर्ययोर्मायीयसमस्तक्षोभप्रशान्त्या चिदा-

---

पं० ४ क॰ पु० सोपदेशमतः सर्वेति पाठः।

समुत्थाने तदुदयो यथावत्प्रागुदीरितम् ।
स्वाभाविकं स्यात्सहजं बलमात्मन्यकृत्रिमम् ॥१८॥
तदेवं सति तस्मिंस्तन्मुद्रावीर्यं विजृम्भते ।
खेचरी सा शिवावस्था शिवव्योम्न्युदिता यतः ॥१९॥
खे स्वचिद्गगनाभोगे चरणात्खेचरीति सा ।
ध्येयानुकारतादात्म्यप्रतिपत्त्युदयात्मिका ॥२०॥
अत एव शिवावस्था स्वरूपावेशशालिनी ॥५॥

---

एवं मौद्रं च मान्त्रं च वीर्यं स्यादेकरूपकम् ॥२१॥
कार्यभेदाद्भेदयोगि बाह्यार्थप्रतिपत्तितः ।
अतो मुद्रामान्त्रवीर्यव्याप्त्युपायार्थमाह च ॥२२॥

गुरुरुपायः[६] ॥६॥

---

त्मकस्वरूपोन्मज्जनैकलक्षणमवस्थासाम्यमस्ति केवलं बाह्यार्थज्ञाने कार्यभेदात् पृथगर्थता ज्ञायते इत्यर्थः ।

६ गुरुरत्र मन्त्रादिबललाभे पारमेश्वरी अनुग्राहिका शक्तिरुपेय-

---

पं० ४ तदेवमिति पद्यार्धं पुस्तकान्तरेषु अविद्यमानं ग' पुस्तकाधारेण पूरितमस्ति ।
पं० ७ क' ग' पु० ध्येयाकारस्य तादात्म्या इति पाठः ।

प्राप्तावत्र गुरुः शक्तिरुपायः परमः स्मृतः ।
यतः सा शाम्भवी शक्तिरनुग्रहकरी सदा ॥२३॥
उत्पाताद्रक्षितो जन्तुः क्रियते भवनिस्पृहः ।
तदधिष्ठितदेहोऽसौ नीयते सद्गुरुं प्रति ॥२४॥
वक्तृत्वात्तात्विकार्थानामुपेयपदलम्भनात् ।
गुरुरौन्मनसे धाम्नि विश्रान्तिपथदर्शकः ॥२५॥६॥

---

एवं गुरौ प्रसन्ने तु किं भवेत्तत्प्रदर्श्यते ।

मातृकाचक्रसंबोधः ॥७॥

स्वाभासा मातृका ज्ञेया क्रियाशक्तिः प्रभोः परा ॥२६॥
तस्याः कलासमूहो यस्तच्चक्रमिति कीर्तितम् ।

---

पदप्रापिणी, यया अनुत्तरे परमशिवाख्ये औन्मनसपदे विश्रान्तिभाग्भवति भक्तजनः ।

७ अनुत्तरमूर्तेः परमशिवस्य स्वेच्छया विश्वं सिसृक्षोः प्रथमस्पन्दात्मिका स्वरूपप्रत्यवमर्शनलक्षणा तदभिन्ना मातृकाख्या क्रिया-

---

पं० ४ क॰ पु० तदधिष्ठितदेहस्य इति पाठः ।

पं० ५ वक्तृत्वादित्यारभ्य सार्धपद्यं पुस्तकान्तरेष्वनुपलभ्यमानं ग० पुस्तकात् संगृह्योपन्यस्तम् ।

पं० १० क॰ पु० तस्य कालः समूहश्च इति पाठः ।

तस्य सम्यक् परिज्ञानं यत्संबोधः स इष्यते ॥२७॥
सति तेन विवर्तो यो वाच्यवाचकलक्षणः ।
क्रियाशक्त्युदितत्वात्स भिन्नोऽभिन्नः सदायतः ॥२८॥
नित्योदितानस्तमितप्रकाशवपुषः पुरा ।
वीर्यौन्मुख्यात्प्रभोरिच्छाशक्तेः समुदयो भवेत् ॥२९॥
ततः संवेदनस्पर्शौ प्रादुर्भूतौ ततः पुनः ।
सर्वार्थप्रतिभासश्च ततो ध्वनिरनाहतः ॥३०॥
पदवाक्यार्थगर्भः स्यात्ततः प्राणात्मिका क्रिया ।
पञ्चाशद्वर्णगर्भा वाक् ततः सर्वस्य संभवः ॥३१॥

---

शक्तिरस्ति, सैव अम्बा-ज्येष्ठा-वामा-रौद्रीरूपं शक्तिचतुष्टयं विभाव्य ध्रुवेच्छोन्मेषादिकलानां प्रसरविश्रान्त्यादौ अन्योन्यव्यतिमिश्रणात् उद्भविष्यन्तं बीजात्मकशुद्धाध्वानं तदभेदवेदनरूपं बिन्दुं च प्रोल्लास्य उत्स्रक्ष्यदधरभूमेः विसिसृक्षारूपं विसर्गं प्रदर्शितवती, येन्यात्मशाक्तोल्लासमयमशुद्धाध्वानं प्रपञ्चयति । तत्र सर्वशक्तिचक्रक्रोडीकारिण्या इच्छाशक्तेः प्राणनात्मतावतारे अनाहतध्वनिविवर्तनपूर्वं पदवाक्यादिगर्भप्राणक्रियासमुद्भवः । अतो मातृकैव एतावता वाच्यवाचकात्मकस्य विश्वस्य प्रपञ्चयित्री मन्त्राणां मुख्यमादिकारणम् इत्यर्थः ।

---

पं० ८ क० पु० ततश्च पदवाक्यार्थगर्भा प्राणात्मिका इति पाठः ।

पं० ९ क० ग० पु० पञ्चाशद्वर्णगर्भान्तर्विश्वसर्गस्य इति पाठः ।

मन्त्रादिवस्तुजातस्य मूलमेकं ततः स्मृता।
मातृकैव क्रियाशक्तिः शिवस्येत्थं विजृम्भते ॥३२॥
मातृकाचक्रसंबोध एवं जातो यदा तदा।
यद्यद्वक्ति प्रबुद्धः सन्प्रभुर्मन्त्रेन्द्रतामियात् ॥३३॥७॥

---

इत्थं प्रज्वालिते मान्त्रे तेजसि प्रज्वलत्यलम् ॥
कार्मं पुनर्भवकरं वपुस्तत्राह शंकरः ॥३४॥

शरीरं हविः ॥८॥

ज्ञानानले प्रज्वलिते मन्त्रतादात्म्यलक्षणे।
शरीरं प्रगलत्येव भौतिकं कर्मबन्धनम् ॥३५॥
हविर्भूतमतश्चाथ दिव्यदेहाश्रयाद्यतः ॥

---

८ एवं संबोधवतः प्रबुद्धस्य यत्किंचन निरन्वयं लौकिकं वा भाषणमयमपि, तत् मन्त्रवत् स्वकार्यसंपत्तौ निर्यन्त्रणं प्रसरेदिति।

९ मान्त्रं दिव्यदेहमाश्रित्यासीनस्यास्य सर्वभावजालचिदग्निसात्करणलक्षणेष्टिं कुर्वतो यजमानस्य मायीयप्रमातृताप्रशान्त्या सर्वाहंभावपरवीर्यात्ममान्त्रशरीरसंपत्तौ देहबन्धनहेतोः कार्ममलस्य विनष्टिरित्याशयः।

---

पं० ३ क॰ पु० प्रमातृचक्रसंबोध इति पाठः।
पं० १० क॰ पु० हविर्भूतमय इति पाठः।

एष एव परो देहो यजमानस्य चिद्विभोः ॥३६॥
निरर्गले महासत्त्वे नित्योदितमहानले ।
यदर्पणं शरीरादेर्भावजातस्य सर्वदा ॥३७॥८॥

—— ——

एवं परं ज्ञानकायस्थितस्यान्नं किमाह च ।

ज्ञानमन्नम्[1] ॥९॥

ज्ञानमत्र परं सम्यगुक्तं प्रकरणद्वये ॥३८॥
तदेवान्नमिव ज्ञेयं परितृप्त्युपपादकम् ।

---

१० परावस्थायां स्वात्मवैभवविजृम्भणं परिशीलयन् असावत्यन्तं निराकाङ्क्षः, अन्तर्बहिःस्वात्मविस्फुरणमये विश्वस्मिन् भरितस्वभावत्वात्; व्यवहारे तु कदाचित् शरीरभूमिकायां वर्तमानः प्रबुद्धनटवत् स्वात्मचमत्करणपूर्वं पात्रीभूय अभिनयान् निर्वहन् विषयेन्द्रियैः विषयजातं परामृतरसाच्छुरितमाहृत्य स्वात्मने समर्पयति, न तु विषयासक्त्या स्वरूपस्फूर्तिं विस्मृत्य पशुरिव अधरावस्थामधितिष्ठतीति भावः ।

---

पं० १ क' पु० यजमानश्च चिद्विभुः इति पाठः ।

पं० ६ क' ख० पु० प्रकरणद्वयम् इति पाठः ।

यतः प्रपूर्णतैव स्यादसकृत्तन्निभालनात् ॥३६॥६॥

---

तदेवं सत्यविद्यायाः संहारस्तेन किं भवेत् ।
तदर्थं चास्य निष्पत्त्यै खण्डमाहामरार्चितः ॥४०॥

विद्यासंहारे तदुत्थस्वप्नदर्शनम्[११] ॥१०॥

संसारवेदनी विद्या ह्यविशिष्टा निरूपिता ॥४१॥
तस्याः संहार एव स्यात्स्वप्रकाशोदये सति ।
संहारे सत्यविद्योत्थं भावजातं विमोहकम् ॥४२॥
स्वप्नरूपं स्मृतं तस्य दर्शनं प्रत्यवेक्षणम् ।
इत्येवं परमेशेन संगृह्य च निरूपितम् ॥४३॥

---

११ इत्थमुक्तप्रक्रियार्थनिभालनेन किंचिज्ज्ञत्वलक्षणाया अविशिष्टविद्याया निमज्जने तदुत्पन्नानां स्वरूपशून्यार्थनिर्भासनविकल्पमयानां भवाभवादिजगतां स्वप्नवत् निरुपादानसामग्र्यं स्वस्वातन्त्र्यात् गिरिनगरोपवनादिवैचित्र्येण संवेदनस्वच्छतमदर्पणे निमग्नोन्मग्नानां चित्सत्ताव्यतिरेकितां प्रत्यवेक्षमाणो योगी निरङ्कुशं शिववत् नित्यसर्वज्ञतादिशक्तिः सहजविद्योदयपदे विहरतीत्यर्थः ।

---

पं० ३ क' पु० खण्डस्याह महेश्वर इति पाठः ।
पं० ५ क' पु० संहारे वेदनी इति पाठः ।
पं० ८ क' पु० स्वप्नजातम् इति पाठः ।

प्रबुद्धता वृत्त्युदये सा निरङ्कुशवत्स्थितिः ।
स्वालोककलनात्मत्वं ध्येयैक्यं नित्यतृप्तता ॥४४॥
॥१०॥

---

द्वितीयमेतत्सहजविद्योदयनिरूपकम् ।
शिवसूत्रप्रकरणं समाप्तमिह सांप्रतम् ॥४५॥
प्रवक्तव्यमतश्चात्र विभूतिस्पन्दलक्षणम् ॥
ज्ञानयोगबलप्राप्तौ चिन्तामणिरिवापरः ॥४६॥

इति काश्मीरिकश्रीभट्टदिवाकरात्मज-भट्टभास्करा-
चार्यविरचिते शिवसूत्रवार्तिके सहजविद्योदयाख्यो
द्वितीयः प्रकाशः ॥ २ ॥

---

अथ

# विभूतिस्पन्दाख्यः

---

## तृतीयः प्रकाशः

---

स्वरूपप्रत्यभिज्ञानान्मान्त्वाच्च सहजोदयात् ।
विभूतयः प्रवर्तन्ते कीर्त्यन्ते ताश्च सांप्रतम् ॥
पूर्वापरविमर्शेन यो बोधोऽस्य विजृम्भते ।
तद्विकासादविच्छिन्नपरानन्दः स्वयं भवेत् ॥
येनाखण्डितस्वातन्त्र्यशक्तिः स्वाभाविकी स्फुटा ।
विभूतिः प्रथते, खण्डं समाचष्ट तदर्थकम् ॥
तत्र चित्तात्मनः पूर्वं प्रत्यवेक्षार्थमावदत् ॥

**आत्मा चित्तम् ॥ १ ॥**

---

पं० ६ 'यो बोधोऽस्य' इत्यत आरभ्य 'समाचष्ट तदर्थकम्' इत्यन्तं पादोन-पद्यद्वयमितरेष्वादर्शमूलपुस्तकेष्वविद्यमानम् ग० पुस्तकात्संगृह्य प्रत्युपन्यस्तम् ।

मनःपर्यायमाख्यातं चित्तं सर्वत्र शासने।
इन्द्रियत्वात्स संकल्पः स्यात्तु मन्त्रस्तदुच्यते॥
आत्मैव चित्तं विज्ञेयं वागादिरहितं यदा।
तदा मन्त्रः स विज्ञेयः संकल्पानुविधायकः॥
नैव संकल्पसिद्धिः स्यात्तत्स्वरूपनिभालनात्॥ १॥

---

कुतश्चित्तस्य संकल्पसिद्धिर्नास्ति तदाह च॥

ज्ञानं बन्धः॥ २॥

---

१ मनसो बहिर्मुखतायां परामर्शनं संकल्पः, अन्तर्मुखतायां तु स्वात्ममननात्मको मन्त्रः। आन्तर्मुख्ये विक्षेपाभावात् संकुचितां चित्ततां परित्यज्य सहजं स्वं चिदात्मस्वभावत्त्वमादीयते। तत्र नैविघ्नेन अभ्यासदशायामिन्द्रियवृत्त्यधीनताविरहात् अव्यवहितज्ञानक्रियः तद्बलाक्रमणात् यथास्वेच्छं शिववत् क्षितिवार्यनलाद्यनपेक्षं संकल्पितं वस्तु बहिः सर्वजनदृश्यं स्रष्टुं शक्नोति। अयुक्तस्य संकल्पादयोऽनन्यदृश्या अबहिःप्रकाश्याः, युक्तस्य तु मन्त्रादयोऽपि शैवासाधारणगुणित्वात् यत् किंचित् सुदुष्करमपि अर्थजातं प्रकाशयितुं प्रभविष्णव इत्याशयः।

---

पं० ५ क' ख' पु० तेन संकल्पसिद्धिरिति पाठः।

ज्ञानं विषयसंश्लेषाद्रागादिज्ञप्तिलक्षणम्।
तदेव बन्धश्चित्तस्य स्वरूपावरणात्मकम्॥
अन्तर्बहिश्च विषयानासक्त्याभ्यासपाटवात्।
यदा मन्तव्यता तस्य तद्द्रष्टा मुक्त एव हि॥२॥

---

इत्थं नित्यस्य च द्रष्टुः किमावरणमुच्यते॥

**कलादीनां तत्त्वानामविवेको माया॥३॥**

कलादिक्षितिपर्यन्तस्तत्त्वग्रामोऽस्य सोच्यते।
ततमेतैर्जगत्सर्वमतस्तत्त्वानि तत्र च॥
कला कर्तृत्वसामर्थ्यं किंचिन्मात्रं प्रकीर्तितम्।

---

२ रागादिना विषयेषु व्यासङ्गात् अविगलितरजस्तमोमलं विक्षिप्तं चेतः प्राच्यवास्तवस्वरूपाक्रमणात्मस्वबलालाभे प्रकाशावरणक्षित्यभावात् जनसाधारणान् संकल्पान् निर्मातुं न प्रभवति, अतो विषयासक्तिरेव यथेच्छनिर्माणप्रतिबन्धमूलमित्यर्थः।

---

पं० ३ अन्तर्बहिरित्यादि पद्यार्धम् इतरमूलादर्शपुस्तकेष्वविद्यमानं 'ग' पुस्तकाधारेणोपन्यस्तम्।

पं० ४.क. पु० तदा मन्तव्यतेति पाठः।

तादृशं ज्ञानसामर्थ्यं विद्यातत्त्वमिति स्मृतम् ॥
इदमेवेष्टमस्तीत्थं रागः पाशोऽस्ति बन्धनम् ।
इदानींतनभावेऽस्मिन् कालोऽप्याकलनं मतम् ॥
नियतत्वं कर्मफले नियत्यात्मकतात्मनः ।
समदुःखसुखज्ञत्वमन्तस्तत्त्वे प्रधानता ॥
सुखदुःखविमोहित्वं गुणाः स्युर्मन्तृता च धीः ।
संरम्भत्वमहंकारो मनश्चाक्षप्रयोक्तृता ॥
अक्षैर्विशेषितं ज्ञत्वं बुद्धीन्द्रियगणः स्मृतः ।
तैरेव भिन्नं कर्तृत्वं कर्मेन्द्रियगणस्त्वयम् ॥
शब्दमात्रावभासित्वं तन्मात्रकगणस्तथा ।
भिन्नशब्दादितोद्वृत्तं गणः स्यात्पाञ्चभौतिकः ॥

---

पं० ३ कालोऽप्याकलनं मतम् इत्यतोऽनन्तरम्

'अल्पेषु भावजातेषु विद्या ज्ञानसमर्थता ।
कालोऽधुनादिताबुद्धिप्रवृत्तिः कलनात्मिका ॥'

इति पद्यं ख. पुस्तके समुपलक्ष्यमाणं प्रक्षिप्तमधिकं प्रतिभाति ।

पं० ६ क. पु० स्युः स्मर्तृता इति पाठः ।

पं० ११ क. पु० शब्दादिनोद्वृत्तमिति पाठः ।

एतेषामविवेको यः सा माया मोहनी यतः।
विवेकः पुनरत्रैव शुद्धविद्यादिसंश्रितः॥
अतः शुद्धानि तत्त्वानि प्रोच्यन्ते तत्त्ववेदिभिः।
स्वज्योतिष्ट्वं शिवं तत्त्वं दृक्क्रिये शक्तिरुच्यते॥
सर्वज्ञानक्रियावत्त्वयोग्यता स्यात्सदाशिवः।
प्रेर्यत्वमैश्वरं तत्त्वं तद्द्वारा प्रेषणा यतः॥
शिवशास्त्रादिबोद्धृत्वं विद्या शुद्धेह कीर्तिता।
इत्थमात्मन्यवस्थाभिरेताभिस्तत्त्वकल्पना॥
तत्त्वानां तदवस्थात्वमुच्यमानं न दुष्यति।

---

३ माययैव कलादिभिः तत्त्वजालै रचितकञ्चुक-पुर्यष्टक-भौतिक-शरीरेषु परिमितप्रमातृभावाभिमानं आहितानामणूनां सदोदितस्व-प्रकाशद्रष्टृस्वरूपं समाव्रियते। विवेकाभ्यासालम्बिनां तु मायापदो-परिगतानां शुद्धविद्यासंश्रयित्वात् अनावृतस्वात्मप्रत्यवभासः। तदनु बन्धनिवृत्त्या प्रागुक्तमन्त्राद्यधिकारः।

---

पं० ३ क. पु० प्रोच्यन्तेऽतो विवेकत इति, ख. पु० प्रोच्यन्ते साञ्जनादणु इति पाठः।

पं० ५ क. पु० क्रियावर्ते योग्यता इति पाठः।

पं० ६ ख. पु० तद्द्वारप्रेरणमिति पाठः।

सर्वानुस्यूतरूपत्त्वाद्विमर्शः परमस्त्वतः ॥३॥

---

इत्थं तत्त्वात्मककलारूपं प्रसरमात्मनः।
निरूप्य पुनरप्याह तत्संकोचाद्यथोदयः॥

शरीरे संहारः कलानाम् ॥४॥

तत्त्वानां यत्स्वसामर्थ्यं कलास्ताः परिकीर्तिताः।
तत्संघातः शरीरं स्यात्सकलत्वमतोऽस्य तत्॥
आधार आत्मनस्तत्र कलानां करणात्मनि।
स्वके स्वकेऽनुप्रवेशः संहारः परिकीर्तितः॥
एवं यावद्बोधदेहप्राप्तिस्तत्रोदयः परः।

---

४ तत्त्वसंघातात्मके शरीरे तत्त्वावयवानां प्रातिलोम्येन स्वस्वकारणानुप्रवेशलयभावनया तदावसानिके सर्वाधिष्ठानच्चिन्मये स्वात्मनि समापत्त्या परबोधदेहोदयः।

यद्वा हठात्सर्ववृत्त्युपसंहारात्मना उल्लङ्घनवृत्त्या विकल्पहानैकाग्र्यवृत्तिसंपत्तिपुरस्सरम् अविकल्पसंविदात्मैश्वर्यपदावाप्तिः। इत्थं प्रमातृत्वेन अभिमतस्य कलाप्रसरस्य स्वरूपावरणानैश्वर्यनिदानस्य उपसंहरणेन सिद्ध्यङ्कुरः पल्लवितः प्रस्फुरेदित्यर्थः।

अथोल्लङ्घनवृत्त्या वा शिवतत्त्वावलम्बनम् ॥
तत्स संहार एव स्यात्कलानां तेन चोदयः ॥४॥

तत्त्वप्रसरसंकोचस्वरूपेऽपीत्थमात्मनि ॥
वृत्त्युल्लङ्घनयोगेन स्वस्वरूपोदयं शिवः।
प्रतिपाद्य पुनः प्राह भूतसिद्ध्युदयः कथम् ॥

नाडीसंहार-भूतजय-भूतकैवल्य-भूत-
पृथक्त्वानि ॥५॥

चिदाधारे शरीरेऽस्मिन्संस्थिते पाञ्चभौतिके।
स्वातन्त्र्यादात्मनः स्वाम्यं गृहे गृहपतेर्यथा ॥

---

५ अन्तर्बहिर्वा द्वादशान्ते प्राणापानोपसंहारात् इडादिनाड्युपशमनेन सिद्धीच्छोः तन्त्रोक्तप्रक्रियोपवर्णितकन्दाद्यधिष्ठाने त्र्यस्रचतुर्लादिसंस्थानां स्वस्वबीजाक्षरचिह्नितां पृथिव्यादिधारणां धारयतो नियतकालांशाभ्यासेन भूतानि वशीभवन्ति, येन पाञ्चभौतिकेषु गमागमविहरणादि अस्य न प्रतिहन्यते। तथा आचरतोऽपि अस्य तदैश्वर्यानासक्त्या भूतानुपरक्तस्वच्छचिदानन्दघनस्वात्मसंस्थितिसिद्धिरपि अप्रयाससिद्धा भवति। तथा तत्त्वसंघटितं वस्तु तदिच्छया वियुज्यते संयुज्यते च। एवं स्वात्मविवर्तनात्मभावजातानां विविधामवस्थां विकृतां च अन्यथा च कर्तुमसौ प्रभुशक्तिरप्रतिहतस्वातन्त्र्या इत्यर्थः।

तत्र चिदाकाशलयान्नाडीसंहार इष्यते ।
यतः सर्वत्र सर्वासां नाडीनां मुखमुच्यते ॥
नाड्याधारा वायवः स्युस्तदाधारश्च चिद्विभुः ।
तस्य वृत्तिलयान्मध्ये षड्गुणा वृत्तिरुत्तमा ॥
स्थिरद्रवोष्णचलता सौषिर्यविपरीतता ।
तत्त्वस्वरूपमथवा स्थानलक्ष्यप्रभेदतः ॥
विभावयन्भूतजयः स्यात्प्रबुद्धस्य च प्रभोः ।
तन्निरासत एवास्य कैवल्यमनुपाधिकम् ॥
षट्त्रिंशत्तत्त्वसामर्थ्ययुक्तं भूतं पृथक् पृथक् ।
करोत्यात्मबलस्पर्शात्स्वविवर्तविवर्तनात् ॥
संघातस्थमथात्मस्थं विकरोत्यथवा विभुः ।
प्रभुशक्तिरतः सेयं सर्वत्राखण्डितात्मनः ॥५॥

---

तथाप्यस्यात्मनो मोहे बहुशाखे विसर्पति ।
स्वरूपसिद्धिरस्य स्यान्न स्याद्वा प्राह शंकरः ॥

मोहावरणात्सिद्धिः ॥६॥

---

६ पारमार्थिकविचारात् अधरभूमिस्थं सिद्ध्याद्याविर्भवनं भेदप्रथास्पदं मायाकोटिपतितमेव, तद्धि योगिजनस्य स्वरूपाच्छादकम्

कामक्रोधलोभहर्षभयत्रासमदोद्गमे ।
प्रहर्षेऽपि च सर्वत्र मोह एव विजृम्भते ॥
तदेवावरणं ज्ञेयं स्वरूपाच्छादकत्वतः ।
हेतुभूतात्ततस्तस्मात्प्राक्कोटिप्रविमर्शतः ॥
सिद्धिः स्यादात्मनः सर्वज्ञत्वकर्तृत्वलक्षणा ॥ ६ ॥

---

सति मोहे सिद्धिरेवं तज्जयात्स्यात्किमाह तत् ॥

**मोहजयादनन्ताभोगात्सहजविद्याजयः ॥७॥**

---

अतः तदुपलब्धये तदवस्थायां प्रहर्षकामादिवृत्त्युद्गमस्य स्वरूपतिरोधायितायां सत्यां तेषां प्राच्यकोटौ चरमकोटौ वा चेतःसमाधानेन सर्वज्ञत्वादिलक्षणा परसिद्धिर्भवेदित्यर्थः ।

७ अपरिच्छिन्नपरिपूर्णात् बहुशाखभेदप्रशमनाख्यमोहजयात् सुप्रबुद्धस्य पूर्णाहंविमर्शसंविदाख्याकृत्रिमविद्योदयो भवति । यद्वा मोहजयात् हेतोः अनन्तभट्टारकाख्यरुद्रप्रमात्रधिष्ठितं शुद्धविद्यापदमध्यास्य सहजालोकसंपत्प्राप्तिः, शुद्धविद्यापदे हि अनन्तनाम्ना रुद्रप्रमात्रा समन्ततः साम्राज्यं भुज्यते इति अत्र ल्यब्लोपे अपादानकारकम् इति ।

---

पं० ३ क. पु० स्वरूपाच्छादकं द्युत इति पाठः ।

बहुशाखो मोह उक्तस्तज्जयः सुप्रबुद्धता ।
नित्यं स्वालोकवशतस्त्वसंकुचितचिद्गतेः ॥
तस्मादनन्ताभोगाख्यात्स्वप्रकाशोदयः स्फुटम् ।
जयस्यानन्तता यस्माद्बहुशाखो विजृम्भते ॥
स एवाभोग इत्युक्तः परिपूर्णस्वरूपतः ।
स्वप्रकाशात्मिका विद्या सहजा प्रागुदीरिता ॥
उद्भवः प्रोद्गमस्तस्यास्तेनात्मालोक उत्तमः ॥७॥

---

एवंसिद्धिः प्रबुद्धः संस्तिष्ठेन्नित्यमतन्द्रितः ।
एकत्वारोपयन्सर्वं तदर्थं प्रोक्तवानजः ॥

## जाग्रद्द्वितीयकरः ॥ ८ ॥

ज्ञानं जाग्रदिति प्रोक्तं तेनालोच्य स्वगोचरम् ।
आदद्यादेकतः सर्वं ततो मोहबहिष्कृतम् ॥
प्रबुद्धः सर्वदा तिष्ठेद्योगिराड् भेदवर्जितः ।
करवत्कर एवातो जाग्रदादानगौरवात् ॥

---

पं० ७ क. पु० उदयः प्रोद्गमात्तस्येति पाठः ।

अत एव द्वितीयत्वं विचित्रत्वादुदीरितम् ॥ ८ ॥

---

इत्थं नित्यप्रबुद्धस्य मोक्षलक्ष्मीश्चिरोषिता ।
शरीरमाश्रयत्येव जीवन्मुक्तस्य सर्वदा ॥
अतः परानन्दरसक्षीव आत्मा सदा कथम् ।
चेष्टते सूत्रमाचष्टे तदर्थं चन्द्रशेखरः ॥

नर्तक आत्मा ॥ ९ ॥

रसभावनयाभिज्ञो वागङ्गाहार्यसत्त्वयुक् ।
यद्वत्प्रौढनटः सम्यगनुगन्ता प्रकीर्तितः ॥

---

८ ज्ञानं जाग्रत् इति प्रागुक्तसूत्रनीत्या जाग्रदत्र ज्ञानशक्तिः। पूर्वं तु अनुवाद्यविधेयभावेन इदं व्याख्याय अधुना विधेयानुवाद्यत्वेन व्याख्यायते सूत्राणां विश्वतोमुखत्वात् । आदानक्रियासादृक्ष्येण ज्ञानशक्तिरूपे करे रूपालोकमनस्कारैः भासितं विश्वं यत्किंचित् परप्रकाशात् भेदाभेदविकल्पोपहतन्यायेन अभिन्नं पर्यालोच्य समादीयते इत्येवं प्रबुद्धः एकस्मिन् संवेदने बहिरन्तः स्वात्ममयं विश्वं विश्रान्तं संजानानो मोक्षलक्ष्मीभाजनं जीवन्मुक्तिव्यवहृतिमाचरन् स्वात्मन्येव विहरेदित्यर्थः।

---

पं० ७ क. पु० रसभावनवाभिज्ञ इति, ख. पु० भावनया वेद्य इति पाठः।

तद्वदात्मा स्वरूपेण स्फुरन्स्फुरति सर्वतः ।
तत्तद्भावरसावेशात्तत्तच्चेष्टाविलासवान् ॥
स नर्तकः स्मृतो यस्मात्सर्वावस्थावलम्बकः ॥९॥

---

नृत्यतोऽस्यात्मनः सम्यगाधारार्थमतोऽवदत् ॥

रङ्गोऽन्तरात्मा ॥ १० ॥

बहिरुन्मेषभाग्योऽयमात्मा नर्तक उच्यते ।
तस्यैवान्तर्निमेषो यः सोऽन्तरात्मा प्रकीर्तितः ॥
स एव रङ्ग आख्यातः पुर्यष्टकसमाश्रयात् ।

---

९ इत्थं विहृतौ अयं परानन्दरसेन घूर्णन् प्रौढनट इव रसभावतदाभासाद्यभिज्ञः मितमातृतात्मपात्रतामुपगत्य अनुकार्यरसभावादीन् आङ्गिकाभिनयादिभिः स्वात्मानमविस्मृत्यैव व्यञ्जयन् सर्वावस्थानुकारी विभावादिभिः आस्वादिपदवीमुपनीतः इष्टानिष्टप्राप्तिपरिहारेच्छामन्तरेण इन्द्रियपरिस्पन्दानुपूर्व्या जगन्नाट्यमभिनयन् सर्वत्र स्वात्मभानेन अविलुप्तदृक्शक्तिसंतोषितमना विलसतीत्यर्थः ।

१० विविधविततनाट्यक्रीडाप्रदर्शनाशयेन यत्र रज्यते स रङ्गः तत्तद्विचित्रभूमिकाग्रहणस्थानं पुर्यष्टकरूपान्तरात्मा । तदाश्रयणेनैव

---

पं० ६ क. पु० बहिरुन्मेषभोग्यस्तु आत्मा इति पाठः ।

प्रवृत्तिस्थितिसंहारैर्नृत्यतीवात्र चिद्विभुः ॥ १० ॥

---

एवं सतीन्द्रियगणस्तस्यानाच्छादको भवेत्।
तदर्थं पुनरप्याह सूत्रं कान्तार्धदेहभृत् ॥

प्रेक्षकाणीन्द्रियाणि ॥ ११ ॥

सुप्रबुद्धः स्वतन्त्रश्च चिदात्मैव यतः परः।
तत्सामर्थ्यादिन्द्रियाणि चेष्टन्ते स्वासु वृत्तिषु ॥
प्रेक्षकाणीव तान्यत्र चिद्विभोः परिनृत्यतः।
स्वरूपावरणे चास्य तानि न प्रभवन्ति[१] हि ॥ ११ ॥

---

नरतिर्यगादिदेहभूमिकासु रचितास्पदः करणप्रवृत्त्या सृष्ट्यादिपञ्चकृत्यकृत् चिदात्मा परिनृत्यति।

११ स्वतन्त्रश्चिदात्मैव करणाद्यवभासयिता, तद्भासैव सर्वस्य प्रकाशमानत्वात् तमेव भान्तमनुपजीव्य विश्वमिदं सर्वं जडान्धमूकप्रायं भवेदिति, अतः तदनुप्राणितानि करणानि त्रैलोक्यनाटकप्रकटनाह्लादातिशयनिर्भरं गलिताहमिदन्तात्मविभागं स्वरूपं साक्षात्कृत्य सहृदयप्रेक्षकजनवत् प्रत्यगात्मदृशो योगिने परामृतमयरसचमत्करणमर्पयन्ति,

---

१ पं० क. पु० चेष्टन्ते स्वस्ववृत्तिषु इति पाठः।

तदेवं सति यद्बुद्धिवशात्सर्वोत्कटः पुमान्।
प्रभवत्येव भगवांस्तदर्थं सूत्रमुक्तवान्॥

धीवशात्सत्त्वसिद्धिः॥ १२॥

शब्दादिविषया[12] वृत्तिश्चिद्रूपाभिनिवेशिनी।
यदा भवेत्तदा बुद्धिस्तत्रैवाध्यवसायिनी॥
पूर्वं भवत्यतः शुद्धा सैव धीशक्तिरुच्यते।
त्यक्ताशयत्वात्सत्त्वस्य भित्तिः सोऽवधिरुच्यते॥
तद्वशात्सत्त्वसिद्धिः स्यादत एव निरूपितम्॥१२॥

---

येन नास्य पशुजनस्येव खेचर्यादिभिः आच्छाद्यमानाभेदप्रथामृतरसं करणचक्रं दुःखमयविश्वसरणौ परिवर्त्यते। अतः परिनृत्यतः चिदात्मनः स्वरूपं न तिरोधीयते इत्यर्थः।

१२ सततप्रसरत्स्वभावेषु करणेषु सत्सु वृत्तिप्रतिफलितान् शब्दादीन् विषयान् आगमोक्तयुक्त्यादिभिः चिन्मयस्वभावाव्यतिरिक्तान् अध्यवस्यन्ती बुद्धिः अनुशयान्तरप्रक्षयात् रजस्तमोवृत्त्यमलिनता स्वज्योतिर्मयं विश्वत्र परप्रकाशं समवेक्षमाणा स्फुरत्तात्मसत्त्वप्रकाशास्पदं योगिनं निष्पादयति इत्यर्थः।

---

पं० ३ क. पु० सत्त्वशुद्धिः इति, ख० पु० सत्त्वभित्तिरिति च पाठान्तरोपेतः पाठः।

पं० ८ क. पु० सत्त्वभित्तिः, सत्त्वशुद्धिरिति पाठान्तरोपेतश्च पाठोऽस्ति।

इत्थं सति स्वतन्त्रत्वमात्मनः स्यादतोऽवदत् ।

सिद्धः स्वतन्त्रभावः ॥१३॥

स्वातन्त्र्यमस्य संसिद्धमात्मनः प्रोक्तै[13]रीतितः ॥१३॥

---

सर्वज्ञत्वक्रियावत्त्वाच्छरीरेऽस्मिन्यथा तथा ॥

सर्वत्र स्यान्न वा तत्र प्राहात्र शशिभूषणः ।

यथा तत्र तथान्यत्र ॥१४॥

आत्मनाधिष्ठिते देहे यद्वत्सर्वज्ञतादयः ।

स्फुरन्ति तद्वत्सर्वत्र स्वाधिष्ठान[14]बलेन च ॥१४॥

---

१३ येन शिवादिधरण्यन्तमशेषं विश्वं भ्रियते दृश्यते भास्यते स्ववशे स्थाप्यते च सोऽस्य स्वतन्त्रभावः सहजज्ञत्वकर्तृत्वात्मकः सर्ववशीकरणशीलः। यथा रासायनिक्या ओषध्या संसिद्धया यत् किंचन वस्तु आविद्धं सत् हेमतामेति एवं शिवस्वरूपभावनया विश्वं भावितमस्य वशे तिष्ठतीत्यर्थः।

१४ अधिकारिणोऽस्य यथा अस्मिन् अधिकृतशरीरे स्वात्मशिवतां परामृशतः स्थितस्य सर्वज्ञत्वक्रियावत्त्वादयः, एवं स्वात्मबलाक्रमणशक्त्या

---

पं० ३ क. पु० प्रोक्तनीतित इति पाठः ।

कर्तुरेवं स्वतन्त्रस्य विशतोऽन्यपुरादिषु ॥
तद्धर्मोपहितस्यास्य स्यादकालपदस्थितिः ।
कथं ? तदर्थं कालारिः प्राह सूत्रं यथार्थवत् ॥

विसर्गस्वाभाव्यादबहिःस्थितेस्त-
त्स्थितिः ॥१४॥२॥

सृष्टिस्वभावाच्चिद्रूपात्प्रवृत्तिकलनात्मना ।
जातस्य कालवपुषः स्पन्दस्यैवात्र चित्पदे ॥
जन्म न स्यात्संकलनात्तस्य संकल्पजस्य च ।
बहिर्बाह्यपदार्थानां पृथक्संस्थित्यभावतः ॥
प्रकाश्यानां प्रकाशैक्यभावनापथसेविनाम् ।

---

सर्वत्र परकीयत्वाभिमतेषु देहेषु सर्वज्ञत्वादयोऽव्यवहिताः प्रस्फुरन्ति इति ।

---

पं० २ विशत इति तद्धर्मोपहितेति च पदद्वयं मूलादर्शपुस्तकान्तरेष्वविद्यमानं ग. पुस्तकाश्रयेण समुपन्यस्तम् ।

पं० ४ 'विसर्गस्वाभाव्यात्' इति सूत्रं तु विमर्शिनीग्रन्थे न विद्यते, एतद्ग्रन्थे एव ग्रन्थकृता संगृह्य व्याख्यातमस्ति ।

पं० ८ बहिर्बाह्येत्यादित आरभ्य योगनिभालनात् इत्यन्तः सार्धपद्यात्मपाठः पुस्तकान्तरेष्वविद्यमानः ग. पुस्तकात्संगृह्य समुपन्यस्तोऽस्ति ।

स्वस्माद्धाम्नः प्रच्यवनं नास्ति योगनिभालनात् ।
अकालकामजा सैव स्यादकालपदाश्रयात्[१६] ॥

अकालपदसंप्राप्तौ यो हेतुस्तमतोऽवदत् ।

बीजावधानम् ॥१५॥

बीजं सर्वस्य जगतश्चिदात्मैव परं स्मृतम् ।
अवधानं तद्विमर्शः सावधानेन चेतसा ॥
तदाकालपदप्राप्तिर्मोहाद्याग्रहहानितः[१६] ।

१५ विसिसृक्षाशीलो हि परमेश्वरः सृज्यवस्तुविषयं स्वस्मिन् आधारभूते समुन्मग्नं स्वाव्यतिरेकित्वेन आलोच्यमानं परिबिभ्रत् अपि नैव स्वात्मविस्मृतिं जुषते । यावता मायाभूमावपि वेद्यप्रकाशनं वस्तुतः परप्रकाशानान्तरीयकतया अन्तःस्थितं सत् स्वातन्त्र्यात् बहिः प्रकाशते । तस्मात् प्रतिपन्नतात्त्विकस्वरूपस्य धर्मिधर्मोपहितता न कदाचित् आक्राम्येदित्यर्थः ।

१६ एवं परिमिताहंभावनिरसनपुरःसरं विश्वकारणशाक्तपदे निरन्तरतया दृढाभ्यासेन चित्तावधानमेव अकालकलितस्वरूपप्राप्त्युपाय इति भावः ।

पं० ३ क. पु० प्राप्तौ हेतुमत्र तथावदत् इति पाठः ।

सर्वभावोद्भवभुवः प्रवेशोऽन्तश्चिदात्मनः ॥
कथं पुनर्योगिवृत्त्या स्यादत्र प्राह शंकरः ।

आसनस्थः सुखं ह्रदे निमज्जति ॥१६॥

पवमानः शुचिश्चण्डो मध्यमः प्राण आसनम् ।
योगिनां ज्ञानपूर्वाणां सन्मत्स्यवलनात्मना ॥
पूर्वमुक्तं च तत्रस्थः सुखं मज्जति तद्ध्रदे ।
ह्रदत्वमत्र प्रागुक्तं सर्वभावोद्भवत्वतः ॥
चिद्रूपस्य च बीजत्वमत एव निरूपितम् ।
अवधानानुप्रवेशावत्रोपायावुदाहृतौ ॥
कालकामजयायैवमजामरपदाप्तये ॥१६॥

---

१७ विज्ञानवतां योगिनां चिदात्मान्तःप्रवेशोपायात्मयोगोचितप्रयत्नाधिगम्यवृत्त्या द्रढिम्ना परिशीलनं विदधतां सत्यामपि उभयवाहोच्छेदात्मकुम्भकवृत्तौ रवीन्दुसंघट्टजन्योदानाग्निपर्यायस्य शुचेरूर्ध्वोत्क्षेपणात्मना रेचकवाहेन अधराधराधारादिपदानि क्रमश उल्लङ्घ्य यावता द्वादशान्तपदे विश्रान्तिर्जन्यते, अत एवोदानस्य द्वैतेन्धनप्लोषकारित्वात् चण्डत्वम्, परमशुद्धिकारणत्वाच्च पवमानत्वम् तदाश्रित्यैव द्वादशान्तस्थशिवचैतन्यामृताब्धौ प्रोच्छलद्विश्ववैचित्र्यतरङ्गे निरायस्तावगाहमानता, यन्निरन्तरसंभोगरसपरिचर्वणोद्युक्तानाम् अकालकलितानुत्तरशाक्तपदसंप्राप्तिः उक्तोपायसेवनतो बहिरन्तःकलनाविकलम् अखण्डस्वातन्त्र्यमयी कल्पते इति ।

एवं कर्त्रंशविश्रामस्तत्स्वातन्त्र्यमखण्डितम् ॥
तेन कर्तृत्वमस्य स्यात्तदाह वृषलाञ्छनः ।

**स्वमात्रा निर्माणमापादयति ॥१७॥**

स्वा शक्तिः परमेशस्य ज्ञत्वकर्तृत्वलक्षणा ।
यावद्वीर्यं बलं तस्य भवप्रभवकारणम् ॥
अतश्च सा जगन्माता तस्य शक्तिमतः परा ।
तया स्वमात्रा निर्माणं यथास्वं रोचते विभोः ॥
तथा संपादयत्याशु तत्स्वातन्त्र्यबलादलम्[१] ॥१७॥

---

एवमस्य च यद्रूपं तदा बुद्ध्या मलावृतम् ॥
तद्विनाशात्पुनर्जन्म न भवेत्तत्र चावदत् ।

**विद्याविनाशे जन्मविनाशः ॥ १८ ॥**

---

१८ प्रागुक्तयोः अवधानप्रवेशात्मनोरुपाययोः अनुशीलनमाहात्म्यात् यथाभिमतं वेद्यवेदकावभासनात्मकं वस्तु अपूर्वोल्लेखावभासनशीलिन्या कर्तृत्वादिसतत्त्वया स्वशक्त्या तत्पदविश्रान्तौ निर्मातुं प्रभवति, तन्निर्माणमेव अस्य स्वातन्त्र्यधामविश्रान्तिसूचकमिति ।

---

पं० ७ क. पु० यथास्वं रचति विभुः इति पाठः॥

सोपाधिका वेदनीया पदार्थविषयैव या ।
अशुद्धा सा स्मृता विद्या पुनः संभवकारणम् ॥
स्यात्तद्विनाशः सहजविद्योदयनिभालनम् ।
सति तेन स्वतन्त्रत्वव्यक्तिः स्यादात्मनः परा ॥
अत एव पुनर्जन्म न भवेत्स्वबलाश्रयात् ।
जीवन्मुक्तिरियं सिद्धिरकालपददायिनी ॥ १८ ॥

---

वेदनीयपरा येयं बाह्यार्थोपाधिरञ्जनात् ।
विद्या तत्प्रेरणे हेतुः क इत्यत्रोक्तवानजः ॥

**कवर्गादिषु माहेश्वर्याद्याः पशुमातरः ॥ १६ ॥**

सर्वात्मकस्वरूपस्य शब्दराशेः कलामयम् ।
यद्रूपं पूर्वमादिष्टं पशोः शब्दानुवेधतः ॥

---

१९ वृत्तिज्ञानं वेद्यफलप्राप्तिसाधनं वस्त्वाकारखचिततया अशुद्ध-विद्या-इत्युच्यते सैव बन्धयित्री, तद्विपरीतशुद्धविद्यानुसंधानेन सहजसंवित्समासादनात् स्ववीर्यलाभे सति आणवमायीयमलद्वयसहकृतं देहेन्द्रियादिसमुदायात्मकं कार्मबन्धनं परिलुप्यते इत्यर्थः ।

---

पं० १ क. पु० सोपाधिका बोधनीया इति पाठः ।

प्रत्ययोत्पादकं सम्यक् तद्द्विरूपं प्रकीर्तितम् ।
बीजयोनिप्रभेदेन तत्र बीजं शिवः स्वयम् ॥
शक्तिर्मायाभिधा योनिः कादिक्षान्ताष्टवर्गिणी ।
माहेश्याद्यष्टकं तत्र परापरफलप्रदम् ॥
अधिष्ठाय पशूनां च बाह्यार्थावगमे स्थितम् ।
मिश्रकर्मफलासक्तिजनकं घोरलक्षणम् ॥
विषयासक्तचित्तानामधोऽधः पातकारकम् ।
घोरघोरतरं तत्स्यादघोरं शिवदायकम् ॥
एवं मात्राष्टकं चैतत्प्रतिवर्गं त्रिभेदवत् ।
पूर्ववर्गे भैरवता संस्थितैवानपायिनी ॥ १६ ॥

---

२० परा वाक्शक्तिः शिवाभिन्नस्वरूपा इच्छादित्रिकमुद्भाव्य वग-वर्ग्यादिरूपां मातृकां समुन्मीलयन्ती पशुप्रमातृषु सविकल्पकसंवेदनदशायाम् अन्तःस्थूलसूक्ष्मशब्दपरामर्शनं कुर्वती वर्गाद्यधिष्ठात्रीभिः माहेश्वर्यादिभिः रागद्वेषकामलोभादीन् आतन्वाना तेषां देहादितादात्म्यमेव निष्पादयति इत्यतः करणद्वारैः प्रसरन्त्यां वृत्तौ घोरादिसंज्ञिका माहेश्वर्याद्याः मातरः पशून् स्वात्मविमुखान् विषयासक्त्या अधः पातयन्ति, पतिभ्यस्तु स्वात्मविकासरसं तथा तथा चमत्करणपूर्वं समर्पयन्त्यो नैव भेदप्रथनमुत्पादयन्ति इत्यर्थः ।

---

पं० ९ क. पु० एवं मात्रष्टकमिति पाठः ।

तदेवं शब्दराशिश्च त्रिस्वरूपोऽष्टवर्गजः ।
उच्चारस्यादिमध्यान्तभेदा वर्णव्रजेऽपि च ॥
तत्राभेदेन शिवता यथा स्यात्प्राह तत्तथा ।

**त्रिषु चतुर्थं तैलवदासेच्यम् ॥२०॥**

उक्तेषु मातृभेदेषु त्रिषु वर्णात्मकेषु च ।
योऽवशिष्यत एवात्र चतुर्थः स शिवः परः ॥
सोऽनुसंधेय आसेच्यस्त्रिषु तैलवदम्भसि ।
तदनुस्यूतरूपत्वात्स्यात्सिद्धिर्[21]रनपायिनी ॥२०॥

---

अत्र वर्णानुप्रवेशे क उपायस्ततोऽवदत् ।

---

२१ प्राक्सूत्रे निर्णीताभिः घोराघोरादिसंज्ञकपशुमातृभिः अधिष्ठितानां स्थूलसूक्ष्मवर्णात्मकविकल्पानामाद्यन्तकोटौ अधिष्ठानात्मना प्रतीयमानेन चिद्रसेन परिषेचनं विधेयम् । अर्थात् चिद्रसाश्यानभावेन तदवस्थितिः पुनः भेदप्रथां विगाल्य तैलवत् अधिकाधिकप्रसरदाश्रयव्याप्त्या चिद्रसमयी अनुसंधेया येन तेषां स्वव्यापृतिर्बन्धनात्मिका अपेयादित्यर्थः ।

---

पं० ७ क. पु० सोऽनुसंबन्ध आसेव्य इति पाठः ।

पं० ९ क. पु० क उपाय इतोऽवदत् इति पाठः ।

मग्नः स्वचित्ते प्रविशेत् ॥२१॥

बाह्यार्थाकारता येयं प्रवृत्तिं भजतो विभोः ।
पूर्ववृत्त्युदयेनालं तत्प्रत्याहृतियोगतः ॥
स्वात्मन्येव निमग्नः स्यात्प्रवृत्त्युपरमे सति ।
एवं निमेषवशतः शिवो भूत्वा स्वचेतसा ॥
अङ्गारकल्पवर्णानां वह्निवच्चान्तरं विशेत् ।
पुनर्भैरववृत्त्यैव मन्त्रानुप्राणनं परम् ॥
न केवलं यावदयं विधिः परपुरादिषु ।
इत्थं सति च मन्त्राणां शिवभैरवता स्फुटम् ॥
स्फुरत्येवान्यथा कस्माद्वर्णात्मा मन्त्र ईश्वरः ॥२१॥

---

तदेवं वर्णमात्रस्य पूर्वापरनिरासतः ।

---

२२ बहिरिदन्तोन्मुख्यं जिगमिषोः चिन्नाथस्य उद्युक्तप्रसरदृढक्रिया-शक्तिमत्त्वात् येयम् अर्थाच्छुरिता वृत्तिरस्ति, तस्याः प्रत्याहरणात् योगी अङ्गारवह्निन्यायेन अविकल्पसंवित्त्या वर्णानुप्रवेशं कुर्यात् । वर्णानुप्रवेशे संसिद्धया भैरवमुद्रया मन्त्राद्यनुप्राणनमपि सिद्ध्येदिति ।

---

पं० १ क. पु० मग्नः स्वचित्तेऽनुप्रविशेत् इति पाठः ।

स्थितत्वात्किं भवत्याह तदर्थं सूत्रमीश्वरः ॥

मध्येऽवरप्रसवः ॥२२॥

वर्णस्योच्चार्यमाणस्य पूर्वमध्यान्तलक्षणम् ।
भागत्रयं यत्तत्रादिपर्यन्ते शिवरूपता ॥
संस्थितैवोद्बुभूषाख्यविश्रमाख्यस्वरूपतः ।
मध्ये च प्रसवो भ्रंशः स्यात्पशोर्वर्णमात्रके ॥
पत्युः शाक्तं स्फुरद्रूपमेतदेवोपदिश्यते[२३] ॥२२॥

---

इत्थं सति त्रिस्वरूपे यथा साम्यं भवत्यलम् ॥
तथा प्रदर्शयन्नाह पार्वतीदयितः पुनः ।

---

२३ उच्चिचारयिषायां तद्विरतौ च आद्यन्तकोटिलक्षणायां मध्यमादिवाग्विषयाणां स्थूलसूक्ष्मसंनिवेशवतां वर्णानां पश्यन्त्यादाव-विभक्तपदे निलयनात् अप्रयाससंसिद्धा शिवरूपता अस्ति । मध्यकोटौ तु तेषां तत्तद्विचित्राकारसंनिवेशस्फुरणात् अविकल्पसंविदः सकाशात् परिभ्रंशित्वमित्यर्थः ।

---

पं० २ ख. पु० प्रसर इति पाठोऽस्ति ।

पं० ६ ख. पु० मध्ये च प्रसरो भ्रंश इत्येवंरूप एव पाठो व्याख्यातोऽप्यस्ति ।

**प्राणसमाचारे समदर्शनम् ॥२३॥**

सर्वज्ञानक्रियारूपं यत्स्वसामर्थ्यमुत्तमम् ।
स प्राणः परनादाख्यः सर्वानुप्राणनक्षमः ॥
तत्समाचार आवेशो वर्णशब्दाणुषु स्फुरन् ।
तेनाभेदश्चानुभवः समदर्शनमुच्यते ॥
एवं तद्बलमाक्रम्य सर्वज्ञानबलान्विताः ।
वर्णमन्त्रादिकाः सर्वे भवन्तीति किमद्भुतम्[२४] ॥२३॥

---

वर्णानुप्राणनं शंभुर्निरूप्याह प्रसङ्गतः ।
यथा भावशरीरादेः स्यादनुप्राणनं तथा ॥

**मात्रास्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् ॥२४॥**

माया[२५]द्यवनिपर्यन्ततत्त्वग्रामकलास्तु याः ।

---

२४ सर्वप्रकाशानां जीवितभूते परनादाख्ये स्वतन्त्रप्रकाशे समापत्त्या वैखरीपर्यन्तं प्रसृतानां पदमन्त्रादीनामभेदानुभवनाभ्यासधाराधिरूढ़ैः परवीर्यलाभः इत्यर्थः ।

२५ मायातत्त्वादिपृथिवीपर्यन्ततत्त्वकला भूतशरीरोपादानभूताः स्वात्माभिन्नताप्रत्ययानुसंधानेन चिद्रसमयीः निष्पाद्य शब्दादिविषया-

---

पं० ४ क. पु० शब्दवर्णाणुषु स्फुटम् इति पाठः ।

ता मात्रा व्यक्तयो याश्च प्रतितत्त्वं स्वगोचरे ॥
तासु स्वप्रत्ययं ज्ञानं प्रतिस्वं तेन पूरणम् ॥
अनुसंधानमेतत्तत्कर्तुस्तद्भूम्युपाश्रयम् ॥
सति तस्मिन्विनष्टस्य भावादेरुदयः पुनः ।
एवं कर्तृधरावेशबलतो यत्र यत्र च ॥
मात्राप्रत्ययसंधानं कुर्यात्तत्कर्तृता भवेत् ।
सर्वज्ञसर्वकर्तृत्वबलावेशदृढस्थितिः ॥ २४ ॥

---

य एवं नित्ययुक्तः स भवेत्कीदृक्तदाह च ।

शिवतुल्यो जायते ॥ २५ ॥

सर्वस्मिन्कारणकुले शिवः शिरसि वर्तनात् ।
सदा निरुपधिज्योतीरूपत्वाच्चित्स्वरूपतः ॥
तत्तुल्यो नित्ययुक्तत्वात्कुर्वन्नपि विचेष्टितम् ।

---

स्पदं भावशरीरमपि चिदानन्दघनरसमयमुदेति येन सर्वकर्तृत्वादिभूमिसमावेशवीर्यं लब्ध्वा सर्वत्र परिपूर्णज्ञत्वकर्तृत्वादिरूपं परमैश्वर्यमभ्यास्यते इत्यर्थः ।

---

पं० ५ क. पु० कर्तृवरादेशबलत इति पाठः ।

जीवन्मुक्तः साधकः स्यात्पूर्वोक्तज्ञानवीर्यतः ॥२५॥

---

एवमभ्यस्यतश्चास्य कीदृशी नित्ययुक्तता ।
तदर्थं भगवान्सूत्रमाह व्रतनिरूपकम् ॥

शरीरवृत्तिर्व्रतम् ॥ २६ ॥

शरीरमेव कङ्कालं कपालं कङ्करस्थितम् ।
पृष्ठदण्डं दण्डमत्र करपादगलस्थिताः ॥
अस्थिखण्डाः पञ्च मुद्रा भस्म दीप्तिः परा स्मृता ।
गुणत्रयं चोपवीतं ध्वजिका स्यान्महापथम् ॥
भूषणानीन्द्रियाण्यत्र विहृतिर्विषयेष्वलम् ।
हृच्छ्मशाने सदासक्तिः कायवाक्चेतसा स्फुरन् ॥

---

२६ एवं नित्ययुक्तस्य शिवस्वरूपपरिशीलनातिशयासादिततत्पदत्वात् देहकलासद्भावेपि जीवन्मुक्तिसुखास्वादनेन शिवता उपमीयते । प्रारब्धोपनीयमानभोगातिक्रान्त्या विदेहमुक्तौ तु तादात्म्यमेव प्राप्यते इति भावः ।

---

पं० २ क ख. पु० एवमभ्यस्य तच्चास्य इति पाठः ।

पं० ६ क. पु० दण्डमात्रकरेति, ख. दण्डपात्रेति पाठः ।

पं० १० ख. पु० सदा शक्तिरित्येवंविधः, क. पु० चेतसा स्फुटम् इति च पाठः ।

योो यश्चेष्टापरिस्पन्दो वीरेशस्योत्सवः सदा।
महाव्रतमिदं ज्ञेयं निरर्गलनिजस्थितेः[27] ॥

---

इत्थं व्रतधरस्यास्य जपः कीदृक्तदाह च।

कथा जपः ॥ २७ ॥

यद्यत्कर्तृधरारूढः प्रबुद्धः सन्प्रभाषते।
तत्तज्जपः स्याद्व्रतिनः स जपात्पुरुषोत्तमः ॥
वीर्यावलम्बनोच्चारसंचाराख्या कथा जपः।
एवं चतुर्धा विज्ञेयः शाक्तो हंसश्च पौद्गलः ॥
[निष्कलोऽप्यथ] शाक्तोऽत्र येयं स्वा[हं]क्रिया चितेः।

---

२७ प्राङ्निर्दिष्टनयेन अभ्यस्यतो महाव्रतं पाशुपताख्यं प्रसिद्ध्येत् यत्र कङ्काल-कपाल-दण्ड-पञ्चमुद्रा-भस्म-उपवीत-ध्वज-भूषण-निवास-विहृत्यादिसामग्रीजातमव्यक्तद्रव्यमयमुपयुज्येत। व्यक्तलिङ्गितया तु धर्मध्वजी भूत्वा मलकालिकयोपसंलिप्यते।

---

पं० ८ ख. पु० हांस इति क. पु० पुद्गल इति, च पाठोऽस्ति।

पं० ९ पौद्गल इत्यतोऽनन्तरं क. ख. पु. अविद्यमानः, (........शाक्तोऽत्र येयं स्वा...क्रिया चितेः, इत्येतावानाद्य मध्यतो नष्टाक्षरोऽपि पद्यार्धपाठः ग. पुस्तकात्संपूरितोऽस्ति।

निष्कलः प्रणवाङ्गस्थो हंसो नादकलात्मकः ॥
जीवसंज्ञो मरुद्रूपः स्वप्रवृत्त्यायुतद्वयम् ।
सहस्रं षट्शतान्येव वहत्यच्छिन्नसंततिः ॥ २७ ॥

---

य एवं ज्ञानवान्सिद्धो जपव्रतपरायणः ।
केन दानेन तेनेह भाव्यं तत्राह शंकरः ॥

## दानमात्मज्ञानम् ॥ २८ ॥

आत्मस्वरूपप्रज्ञप्तिर्ज्ञानं तत्परमुत्तमम् ।
उक्तं च वक्ष्यमाणं च तस्य सम्यक् प्रकाशनम् ॥
शक्तिपातप्रबुद्धानां यत्तद्दानमिहोत्तमम् ।
तद्दानात्क्षपणं सम्यक्पाशानां स्यात्पशोस्ततः ॥

---

२८ एवं महाव्रतवतोऽस्य वीरेशस्य पराहंभावभावनापदमधिरूढस्य परवीर्यानुप्राणिततया चतुर्विधानां निष्कलहंस-पौद्गल-शाक्तरूपाणां मन्त्राणां स्वात्मदेवतापरामर्शनसारार्थवत्त्वावर्तनात्मा जपोऽनवरतं प्रवर्तमानो नैव विच्छिद्येत ।

---

पं० २ क. पु० महद्रूपस्वप्रवृत्त्या इति समस्तः पाठः ।
पं० १० क. ख. पु० पाश्यानां स्यात्पशुष्टुत इति पाठः ।

दीक्षाशब्द इह प्रोक्तो दानक्षपणलक्षणः[२१] ॥ २८ ॥

---

एवं सृष्टिस्थितिध्वंसरक्षानुग्रहकृद्विभुः ॥
आत्मैव शिवरूपत्वात्तत्स्वरूपनिरूपणे ।
सूत्रं व्यस्तं समस्तं च प्रोवाचेन्दुकलाधरः ॥

योविपस्थो ज्ञाहेतुश्च ॥ २९ ॥

योनित्वेन च विश्वस्य पर एव स्थितः प्रभुः ।
ज्ञानक्रियात्मा हेयस्य तुच्छीकरणहेतुतः ॥
अतो योगी विश्वरूपपदस्थो ज्ञानपूर्वकः ।
हेतुर्भोगस्य मोक्षस्य प्रकृष्टः प्रतिपादितः ॥
य एवं योगिराट् सम्यक्त्वंशाभिनिवेशतः ।
लब्धस्थितिः स विपस्थस्तज्ज्ञाने हेतुरुत्तमः ॥

---

२९ तीव्रशक्तिपातवतां प्रोक्तजपव्रतिनामुक्तवक्ष्यमाणप्रक्रियया वर्णितमात्मज्ञानमेव पशुषु प्रकाशनीयं तदेव दानं, यतः स्वरूपज्ञापनस्य आणवादिपाशानां च दानक्षपणलक्षणायां दीक्षायामधिकारित्वमनुग्राह्येषु प्रवर्तते इति ।

---

पं० ५ क. पु० योनिस्थो ज्ञानहेतुश्च इति पाठः ।
पं० ११ क. पु० लब्धस्थितिः स विश्वस्थ इति पाठः ।

अत्र ये पशवस्तेषु पतिर्मातृगणः स्मृतः ।
तत्स्थ आत्मा प्रस्फुरति तेन चक्रेश्वरस्त्वसौ ॥
इत्थं चिद्भैरवस्यैता वृत्तयो रश्मयः स्मृताः ।
शब्दादिविषयैर्भोगैः पूजयन्त्यः सदा स्थिताः ॥
एतन्मातृगणज्ञानमत्र हेतुः स्वचिद्विभुः ॥२९॥

———

एवं शक्तिमयस्यास्य विश्वाकारत्वमाह तत् ॥

**स्वशक्तिप्रचयोऽस्य विश्वम् ॥३०॥**

---

३० विश्वकारणं परशिव एव ज्ञानक्रियात्मा हेयतुच्छीकरणप्रयोजककर्ता तत्प्रसादादेव हि विश्वोल्लासधाम्नि संस्थितो योग्येव पूर्णज्ञातृत्वादिसद्भावेन भोगमोक्षभाजनम् । यद्वा कर्तृभूम्यधिरोहणात् लब्धस्थितिः योगीन्द्रः स्वज्ञानशक्त्या उपदेश्यान् प्रतिबोधयितुं शक्तः । अथ वा पशुप्रमात्रधिष्ठानेषु माहेश्वर्यादिमातृकागणेषु तच्चक्रेश्वर आत्मैव प्रस्फुरति । तमेव निजरश्मिरूपा मातृकाधिष्ठितचिद्वृत्तयो विषयसारांशाहरणेन सदा पूजयन्ति । तस्मात् तदाश्रिता इमा मातृकाः तद्व्यतिरिक्ततया स्वसत्तामलभमानाः स्वप्रकाशनाय तमुपजीवन्ति इत्यसौ शाक्तोल्लासमय एवेत्यर्थः ।

---

पं० ६ क. पु० विश्वाकारतयाह तम् इति पाठः ।

एवं शक्तिमतश्चास्य शक्तयः स्वाश्चिदादयः ।
तासां नवनवोल्लासस्पन्दा ये प्रचयाः स्मृताः ॥
त एव विश्वं विज्ञेयं यतः शक्त्यात्मना विभुः ।
जगद्रूपः प्रस्फुरति स्फुरन्नेवात्मना सदा ॥३०॥

---

एवं सृष्टिकृदेवात्मा स्थितिकृल्लयकृद्यथा ।
तथा प्रदर्शयन्नाह सूत्रं त्रिपुरसूदनः ॥

**स्थितिलयौ ॥३१॥**

तैरेव शक्तिप्रचयैर्वृत्त्युल्लासस्वरूपकैः ।

---

३१ यथा शिवस्य विश्वं निजानुत्तरशक्तिमयम् एवमस्य योगिनः शिवतुल्यत्वात् स्वसंविच्छक्तेः विचित्रनवनवोल्लासस्पन्दमयक्रियाशक्तिस्फुरणात्म विकसितमस्ति । तत्तन्नीलसुखादि वेद्यजातं बहिरन्तश्च प्रथमानं प्रकाशविश्रान्तिमाश्रित्य स्वव्यवस्थापनं प्राप्नुवत् अन्यथा स्वसिद्ध्यनुपपत्तिं प्रथयेदिति स्वसंविदेव तथा तथा विश्ववैचित्र्येण सर्वत्र स्वयं स्वैरमनोरथवत् प्रस्फुरति । शक्तितद्वतोरभेदात् शिव एव तथा विभायादिति भावः ।

---

पं० १ क. पु० स्वाश्चिदात्मन इति, ख. पु० स्वाच्चिदात्मन इति पाठः ।

पं० २ क. ख. पु० प्रचयाश्च ये इति पाठः ।

चिदात्मैव स्थितिलयौ प्रकरोति निजेच्छया[३२] ॥३१॥

---

एवं सृष्टिस्थितिध्वंसकालेऽप्यात्मा निजस्थितिः ।
यथा भवति तत्राह सूत्रं शास्त्रार्णवो हरः ॥

तत्प्रवृत्तावप्यनिरासः संवेत्तृभावात् ॥३२॥

तेषां सृष्ट्यादिभावानां प्रवृत्तावपि चिद्विभुः ।
स्वस्थितिं न जहात्येव सदा संवेत्तृभावतः ॥
अनिरासोऽत्राविलोपः संवेत्तृत्वे विशेषणम् ।
इत्थं लोपो व्यवस्थानां नावस्थातुः कदाचन ॥

---

३२ एवं स्वेच्छाशक्त्यैव चिदात्मा स्थितिप्रलयौ रचयति क्रियाशक्त्युन्मीलितस्य विश्वस्य । तत्र शक्तितत्त्वावधि तत्तत्पदाध्यक्षानाश्रितादिप्रमातॄन् अपेक्ष्य तत्तत्परार्धकालप्रमितायुष्कालं यावत् बहिर्मुखत्वेन स्वाधरस्थविश्वस्य अवभासनं नाम स्थितिः । यथास्वमुपरितनपदनिमेषवशात् स्वस्यापि विलयः, का कथा स्वस्मात् अधस्तनस्य विश्वस्य । एवं चित्प्रमातृविश्रान्त्यात्मको लयः । इत्थमेतावुभौ अवभासमानौ स्वशक्तिप्रचय एव । यतः तत्तद्वेद्यजातं निमील्यमानमुन्मील्यमानं च प्रकाशनान्यथानुपपत्तेः संविच्छक्त्यात्मकमेवेत्यर्थः ।

---

पं० ७ क. पु० अनिरासोऽत्रावलुप्त इति पाठः ।

निरूपितं स्यात्सर्वत्रानुस्यूतत्वस्वरूपैः[33] ॥३२॥

---

एवं सुखासुखे अत्र निरूपयितुमाह च ॥

सुखासुखयोर्बहिर्मननम् ॥३३॥

[34]अदिव्यविषयास्वादादिष्टप्राप्त्यादिनोदितम् ।

---

३३ सृष्ट्याद्युन्मज्जनेऽपि चित्स्वभावस्थितिः तुर्यचमत्करणविमर्शनमयात् संवेत्तृभावात् सकाशात् नैव जातु किल निरस्यते । तदित्युपलक्षणं पञ्चकृत्यस्य । पञ्चकृत्यकारी चिदात्मा तत्तत्कृत्योल्लसनात्मस्वात्मैश्वर्यं प्रकटयन् विनश्यत्स्वभावानां तेषां भावानां पूर्वापरकोट्योः चमत्कर्तृतया सदोदितः स्वस्य तत्साक्षिस्वभावतामवगमयेत् । इत्थमविनाशिनोऽवस्थातुरवस्था एव विविधा नष्टोदिता असकृत् विपरिवर्तन्ते न तु तस्य विनाशः । तथात्वे हि तद्विलयादयोऽसाक्षिकत्वात् असंभाव्याः प्रतीयेरन् इत्यर्थः ।

३४ इत्थमुपलब्धृपदस्थितस्य लौकिकप्रेष्ठतमविषयस्पर्शप्राप्तिजन्या आनन्दवृत्तिः सुखम् । तदप्राप्त्या तद्विपर्यस्तापत्त्या च उत्पन्ना अनानन्दवृत्तिः दुःखम् । तत् पुनराध्यात्मिकादिबहुभेदैः बहुविधम् । एवमुभे एते आविर्भूतेऽपि विमर्शदार्ढ्यात् अनहंममतावत्त्वेन नीलादिवत् संवेद्यमाने स्वरूपानावरके स्तः, न पुनः पशुप्रमातुरिव अस्य अहन्तास्पर्शो भवति तत्रेत्यर्थः ।

---

पं० ३ क. पु० सुखासुखत्वे बहिरिति पाठः ।

प्रत्यगात्मनि बाह्यान्तःसुखस्य मननं मतम् ॥
दुःखं त्रिधा पञ्चधा च पुनर्भेदैरनन्तकम् ।
आध्यात्मिकादित्रितयं तापत्रितयमेव तत् ॥
तमो मोहो महामोहस्तामिस्रश्च चतुर्थकः ।
अन्धतामिस्र एवान्यदत्राष्टप्रकृतिः स्थितः ॥
आत्माभिमानस्तु तमो मोहो देहात्मता मतः ।
महामोहस्तु बाह्यस्य पुत्रादेरात्मरूपता ॥
तामिस्रः स्यात्कुटुम्बादिबाधाकर्तर्यमर्षणम् ।
पञ्चमस्त्वन्धतामिस्रो मरणत्रास एव यः ॥
अत एव विभेदेन पुनर्गच्छत्यनन्तताम् ।
चितः कर्तृधरावेशदार्ढ्यात्तादात्म्यरूपतः ॥
सुखदुःखाद्यवस्थाख्यमननं यदुदेत्यलम् ।
कुतश्चित्कारणाद्वापि तदनावरकं भवेत् ॥ ३३ ॥

---

पं० १ क. पु० बाह्यान्तर्मुखस्येति ख. पु० बाह्योऽन्तर्मुखस्येति पाठः ।
पं० ८ ख. पु० कुटुम्बादेर्नाशकर्तुरामर्षेति पाठः ।
पं० ११ ख. पु० चितेः कर्तृधरादेशदार्ढ्यताद्रूप्यभागिता इति पाठः ।

अतस्तन्मननं बाह्यमन्तर्विशति नो यदा ।
तदा तन्मुक्त आत्मैव कीदृशः स्यात्तदाह च ॥

तद्विमुक्तस्तु केवली ॥ ३४ ॥

ताभ्यां च सुखदुःखाभ्यां मूढभावेन च प्रभुः ।
विमुक्तः केवलः स्वस्थः सर्वानुस्यूतवृत्तितः[३५] ॥ ३४ ॥

---

मूढभावश्छादकः स्यान्न वा तन्निजगाद च ।

मोहप्रतिसंहतस्तु कर्मात्मा ॥ ३५ ॥

मोहो[३६] मौर्ख्यमनुद्योगस्त्वविद्या जाड्यमावृतिः ।

---

३५ यदा सुखादिमननमन्तर्नैव विशति, तदा सुखादिना तत्कृतमोहेन च असंस्पृष्टः सन् अविलुप्तस्वात्मविभवः केवलचिन्मात्रपरप्रमातृरूपे विश्रान्त्या योगी योगफलमनुभवतीत्यर्थः ।

३६ यदा अविद्यापर्यायेण मोहेन शरीरादिषु आत्माभिमानितां

---

पं० २ क. ख. पु० तदा तन्मुख आत्मेति पाठः ।

पं० ४ क. पु० तस्यां च सुखदुःखाभ्यामिति, तस्यां तादात्म्यदशायामिति पर्यायोपेतः पाठः ।

पं० ६ क. पु० मूढभावाच्छादक इति पाठः ।

पं० ८ क. पु० मौर्ख्यमनुद्वेग इति, ख. पु० मोहमौर्ख्याद्यनुद्योगश्चाविद्या इति पाठः ।

अविवेकश्च मूर्छादिपर्यायैरभिरुच्यते ॥
शरीरादेरहंभावो यस्मिन्सति विजृम्भते ।
प्रतिसंहत एवात्मा व्याप्तस्तेन निरन्तरम् ॥
कर्मात्मा तस्य च प्रोक्तः संसारी पशुरित्यसौ ।
तदा भेदावभासित्वमभेदाख्यातिलक्षणम् ॥ ३५ ॥

---

मोहे सत्यात्मनोऽहन्तेदन्तारूपं सदा स्थितम् ।
तदुद्वेष्टनयोगेन कर्तृभूमिसमाश्रयात् ॥
प्रबुद्धः शिवरूपः स्यादात्मा नित्यं निजस्थितिः ॥
भेदाभावे भवत्यस्य किं तदाहात्र शंकरः ॥

भेदतिरस्कारे सर्गान्तरकर्मत्वम् ॥ ३६ ॥

---

विजृम्भ्य नैरन्तर्येण व्याप्तो भवति, तदा देहावयवसहकृतशुभाशुभमिश्रकर्माणि समाचरन् पूर्णं चिद्व्योमैकरूपं स्वात्मानमपह्नुवानो विविधविचित्रकर्मफलेभ्यः अभिनिवेशेन स्पृहयालुः नानाविधनरादियोनीः संसरतीत्यर्थः ।

---

पं० ५ क. पु० अभेदाभातिलक्षणमिति, ख. पु० भेदाभावस्य लक्षणमिति पाठः ।

आत्मैव सर्वं बुद्धत्वाद्भिन्नं नेहास्ति किंचन ।
विश्वमातृभिरेतच्च स्वसूत्रेषु निरूपितम् ॥
निवृत्तस्य प्रवृत्तस्य निश्चलैव यदा स्थितिः ।
विषयस्य हि बुद्धानां तत्साम्यमजमव्ययम् ॥
इत्थं भेदतिरस्कारे सत्येकाकारतात्मनः ।
तेन सर्गान्तरं सृष्टेरपूर्वोल्लेख एव यः ॥
तत्कर्मत्वं कर्तृता स्याद्यथारुचि चिदात्मनः ॥ ३६ ॥

---

अत्र हेतुं सुराधीशः प्राह सर्गान्तरं प्रति ॥

**करणशक्तिः स्वतोऽनुभवात् ॥ ३७ ॥**

---

३७ शिवशक्तिपाताविद्धहृदयत्वात् हेतोः कर्मबन्धनोद्धेष्टनशिवयोगाश्रयणेन प्रबुद्धः सन् परमशिवस्वभावात् व्यतिरिक्तं किंचनापि अपर्यालोचयन् देहाद्यहन्तात्म-सकलप्रलयाकलादिप्रमात्रास्पदां भेदप्रथां न्यक्करोति । एवंविधोऽयं स्वस्वरूपप्रत्यापत्त्या निश्चलस्थितिः लब्धपरशाक्तबलो मन्त्रमन्त्रेश्वरादिप्रमात्रुचितमहावैभवप्राप्तौ सत्यां स्वेच्छानतिक्रान्त्या नवनवोल्लेखसंनिवेशादिचित्रितान् अपूर्वसर्गान् कर्तुं प्रभवेदित्यर्थः ।

---

पं० ६ क. पु० अपूर्वोल्लेखनेन यः इति पाठः ।

शक्तिः सर्गान्तरोत्पादे सामर्थ्यं करणेषु यत् ।
तत्स्वतोऽनुभवात्सिद्धमकृत्रिमबलाश्रयात् ॥
यतः करणसामर्थ्यमात्मावेशबलाद्भवेत् ।
तेन सत्यधरारूढो यादृशं कार्यमिच्छति ॥
तादृशं प्रकरोत्येव संकल्पं परमेश्वरः ।
यद्यप्युक्तमिदं सर्वं तथापि व्यक्तये पुनः ॥
प्रकारान्तरमत्रोक्तं विचित्राः सिद्धयो यतः ॥ ३७ ॥

---

३८ यथा साधारण्येन कृम्यादेरपि स्वप्नस्वैरविकल्पादौ विश्ववैचित्र्यनिर्माणशक्त्या कयाचिदपि तत्तदुद्यानवनगिरिसरोनगरादीनामसाधारणानां पदार्थानां निर्मातृत्वं स्वानुभवगम्यम् । एवं योगिना गाढतराभिनिवेशात् अकृत्रिमवीर्यमाश्रयता तद्भूमिकारूढेन यथास्वसंकल्पं यादृशं कार्यमिष्यते तत्सर्वं करणशक्त्या निर्मीयते । प्रागभिहितोऽपि विश्ववैचित्र्योत्पादनसामर्थ्योपायः सिद्धीनां बहुप्रकारान्तरज्ञापनाय इदानीं पुनरनूद्यते ।

---

पं० १ क. पु० सर्गान्तरोत्पादः सामर्थ्यमिति, ख. पु० सर्गान्तरोत्पादसामर्थ्यमिति समस्तः पाठः ।

पं० ६ ख. पु० व्यक्तये तत इति पाठः ।

एवं स्वानुभवस्तुर्यपदरूपः स्फुरत्यलम् ॥
यदा सर्वत्र सर्गादौ तदा लब्धात्मसंस्थितिः ।
भवत्यात्मा तदाहात्र जगतां पतिरादरात् ॥

त्रिपदाद्यनुप्राणनम् ॥ ३८ ॥

त्रीणि जाग्रत्पदादीनि आदिभूतानि यस्य तत् ।
त्रिपदादि स्मृतं तुर्यं युगपत्पूर्णताभिधम् ॥
तेनानुप्राणनं सम्यग्भावानां स्वबलार्पणम्[१] ॥ ३८ ॥

---

कथं कुर्यात्तदाहात्र सूत्रं हार्दतमोहरः ॥

चित्तस्थितिवच्छरीरकरणबाह्येषु ॥ ३९ ॥

---

३९ प्रोक्तोपायजालसेवनेन जागरादीनां तिसृणामवस्थानामनुप्राणकं तुरीयं चिदानन्दघनं शिवतत्त्वमेव परिपूर्णं सर्वभावव्यवस्थापकं यदा उपलभ्यते, तदा व्यवहारदशायां तत्तदिष्टसंगीतादिविषयाणामास्वादाद्यवसरेषु अन्तर्मुखविमर्शावस्थित्या बोद्धृतत्त्वं निरावरणं विद्युद्वत् प्रस्फुरेदित्यर्थः ।

---

पं० २ क. पु० तदा लब्धात्मसंस्थितिम् इति पाठः ।

पं० क. ७ पु० भावानां स्वबलार्पणात् इति पाठः ।

चित्तस्योक्तस्वरूपस्य स्थितिर्निश्चलतैव या ।
अप्रच्युतिः स्वस्वरूपादिति तद्वच्छरीरके ॥
यथास्वं कल्पिते चात्र सबाह्याभ्यन्तरे स्थिते ।
करणग्राम एवालं स्थितिर्या प्राणनं हि तत् ॥
एवं बाह्येषु भावेषु येषु येषु प्रकल्पनम् ।
कुरुते तेषु तेष्वेव प्रथनं स्याचथैव तत् ॥ ३६ ॥

---

एवमन्तःस्थितस्यैव भवेद्बाह्यविसर्पणम् ।
भावव्रातस्य कस्मात्तत्प्रोवाच गिरिजाधवः ॥

---

४० वेद्यौन्मुख्ये संकुचद्रूपतया चित्तीभूतस्य चितत्त्वस्यैव उपायाद्यनुवृत्त्या स्वभावचिदानन्दघनताप्रत्यापत्तेः कल्पितस्य देहादेरपि तात्त्विकस्वभावाप्रच्युतिः । प्रागवस्थायां हि सर्वं भावजातं चिद्रससमकक्ष्यं बहिर्मुखतायां काठिन्यमापन्नमिव स्वप्नमनोरथवत् प्रकाशते । वस्तुतो बाह्याभ्यन्तरं स्वरूपप्रथैव तत्तद्भावेन आश्यानीभूय अवभासमाना पुनर्विलीय चिद्रसीभवतीत्यर्थः ।

---

पं० ४ क. पु० प्राणनं महत् इति पाठः ।

पं० ५ ख. पु० बाह्येषु भोग्येषु इति पाठः ।

पं० ७ क. पु० बाह्यविसर्पणा इति स्त्रीलिङ्गनिर्दिष्टः पाठः ।

## अभिलाषाद्बहिर्गतिः संवाह्यस्य ॥ ४० ॥

आत्मनः स्वबलोद्रेकात्क्रियावेशप्रपूरणे ।
यैवेच्छा सोऽभिलाषः स्यात्तस्मादस्य भवत्यलम् ॥
करणादिसमूहस्य संवाह्यस्य बहिर्गतिः ।
सव्यापारप्रवृत्तिः सा प्रेर्यस्यात्मबलेरणात् ॥
अथाभिलषितव्यं यत्संवाह्यं तदुदाहृतम् ।
काकाक्षिन्यायतस्तूक्तं पशोरेव पशोः पुनः ॥
सर्गे सत्यभिलाषो यः स सर्वविषयेष्वलम् ।
तस्मात्कर्मात्मनः प्रोक्ता संवाह्यस्य बहिर्गतिः ॥
स्वस्वरूपपरित्यागो बाह्यो वैषयिकव्रजः ।
गतिः प्रसरणं तत्र संवाह्यस्य भवत्यतः ॥
विषयादिभिरेवासौ सदा संवाह्यते यदा ।
तदा दुरभिलाषाख्यो मोह एवास्य जृम्भते[41] ॥४०॥

---

४१ यैव स्वात्मवीर्याक्रमणातिशयात् अधरस्यां दशायामपि दर्शन-श्रवणादिक्रियां निर्वोढुं कामयमानस्य आत्मनो धीकर्मेन्द्रियगणेषु चिद्बलाधानेच्छा स एव अभिलाषः, तेनैव संवाह्याख्यस्य करणचक्रस्य प्रेरणात् शब्दस्पर्शादिविषयेषु प्रवृत्तिलाभः ।

जीवसंज्ञश्च कर्मात्मा सति दुष्टे तदेषणे ॥
तत्त्वयादात्मनः किं स्यादथोवाच महेश्वरः ॥

तदारूढप्रमितेस्तत्त्वयाज्जीवसंत्त्वयः ॥४१॥

अभिलाषोद्गतौ पूर्वा कोटिर्द्रष्टृधरा स्मृता ।
तदा तस्मिन्नावसति प्रबुद्धः परमार्थवित् ॥
यदा द्रष्टृधराक्रामी स्वबलोद्योगवीर्यतः ।
तदासौ रूढविज्ञानः प्रमाता बुद्ध उच्यते ॥
प्रमातुः प्रमितिस्तस्य स्वसंविज्ज्ञानमेव यत् ।
तदाप्यारूढप्रमितेरभिलाषत्त्वयो भवेत् ॥

---

यद्वा खेचरी-गोचरी-दिक्चरी-भूचर्याख्यशक्तिवृन्दाधिष्ठितैः कञ्चुकादिभिः सह योनेर्योन्यन्तरं संवाह्यते प्राप्यते यः स संवाह्यः कर्मात्मा पशुः। तस्यैव पाशराशिमूलभूताभिलाषाख्याणवमलसंबन्धात् स्वस्वरूपानुभवं परित्यज्य बाह्ये विषयजाते रिरंसयिषया प्रसरणं भवति। उत्तरोत्तरं स एव घनीभूततावस्थायां मोहकार्यं विदधानो भूचरीशक्तिचक्रमाश्रित्य पशून् संवाहयतीत्यर्थः।

---

पं० १ 'दुष्टे तदेषणे' इतीयान्पाठः पुस्तकान्तरेषु त्रुटिसंभवादविद्यमानः ग. पुस्तकात्समुपलभ्य संनिवेशितोऽस्ति।

तत्त्वयाज्जीवसंज्ञस्य त्वयः कर्मात्मनः स्मृतः ॥४१॥

---

जीवसंज्ञः स्मृतो बध्यः संसारी पशुरित्यतः ॥
पाशराशिस्ततौ सत्यां कीदृगात्मा तदाह च ।

भूतकञ्चुकी तदाविमुक्तो भूयः पतिसमः परः ॥४२॥

महाभूतानि पञ्चैव पाशरूपाणि कञ्चुकम् ।
कञ्चुकं चावृतिर्ज्ञेया तदासौ भूतकञ्चुकी ॥
अविमुक्तो बद्ध एव भूयः पूर्वोक्तरीतितः ।
सर्वज्ञसर्वकृद्भूमिरूढ्या पतिसमः परः ॥

---

४२ एवं दुरेषणायां मिताहन्तासंयोगेन मोहानुभवात् कदाचित् सुकृतसंचयोदितशक्तिपातः शैवशासनविवेकपरो द्रष्टृभूमिकायां प्ररूढसंवित् खेचर्यादिभिः शक्तिभिः पशुकार्यवैपरीत्येन कञ्चुकादारभ्य तन्मात्रावधि बाह्याभ्यन्तरं स्वसंविन्मरीचिकचनं प्रकाशयमानं स्वरूपानन्दमयं रसयन् यदा पाशवाभिलाषं जहाति तदैव अस्य संवाह्यात्मनः पुर्यष्टकस्य प्रशमः ।

---

पं ८ क./पु० सर्वज्ञः सर्वकृत् इति व्यस्तपाठः ।

स्यादसौ नात्र संदेहः सम्यक् स्वानुभवादलम् ॥४२॥

---

भूतकञ्चुकिनश्चास्य संबन्धः प्राणसंज्ञकः ॥
स कथं प्राह भगवानत्र सूत्रं वृषाकपिः ।

नैसर्गिकः प्राणसंबन्धः ॥४३॥

स च भूतशरीरस्य प्राणसंबन्ध एव यः ।
निसर्गसिद्धोऽसौ ज्ञेयः प्राणः प्राणमयो यतः ॥४३॥

---

४३ इत्थमभिलाषात्मकमलप्रक्षये भौतिकदेहसंबन्धस्थित्या अविमुक्ततायां भासमानायामपि सर्वकर्तृज्ञातृत्वभूमिप्ररूढ्या नैरन्तर्येण अनुत्तरचिदानन्दघनस्वात्मशिवतामनुभवन् बध्यपशुभावनिष्क्रान्तो देहकलाया अविगलनात् शिवसदृक्षो भवति, न तु शिव एव देहपातानन्तरं तद्भावप्राप्तेः ।

४४ प्रोक्तार्थनीत्या तदारूढसंवित्त्वात् पुर्यष्टकाभिमानविगलनेन तत्संबद्धस्य भूतकञ्चुकस्यापि अवश्यं भ्रंशप्राप्तौ सत्यामपि, तत्स्थैर्यनिमित्तप्राणपुर्यष्टकसंबन्धो निसर्गसिद्धोऽभ्युपगम्यते । संविदेव किल संकोचावभासपूर्वकं विश्ववैचित्र्यावभासनात् प्राणनात्मकग्राहकभूमिं श्रित्वा

---

पं० ६ क. पु० निसर्गसिद्धर्थं संज्ञेयः प्राणापानमयो यदा इति पाठः ।

बिन्दुनादात्मकस्यास्य मार्गत्रयविसर्पिणः ।
जयः कार्यो न वा कार्यः स्वसिद्ध्यै प्राह चात्र तत् ॥

नासिकान्तर्मध्यसंयमात्किमत्र सव्यापसव्य-
सौषुम्नेषु ॥४४॥

नासान्तर्द्वादशान्तः स्यात्तत्र संन्यस्तचेतसाम् ।
नियमात्तज्जयः सिद्धस्ततः स्वात्मस्थितिः स्फुटम् ॥
मध्यं हृदयमेवात्र तत्र प्राणनिरासतः ।
चेतसो लीनवृत्तित्वाद्भवत्यात्मोदयः परः ।
एवं प्राणजये सिद्धे स्यात्किमत्र प्रयोजनम् ।
वामदक्षिणसौषुम्नमार्गेषु प्राणवाहिषु ॥

---

ग्राह्यरूपजगदात्मना स्फुरन्ती स्वयमेव स्वविभवविस्फरणपूर्वं जीवद-वस्थायां स्वोत्थापितैः शुभाशुभविकल्पैः पुण्यापुण्यकर्मोपचयं विधाय तत्समुचिता नरतिर्यग्देवतायोनीः भ्राम्यन्ती कदाचित् निरपेक्षशक्तिपा-ताधिष्ठानात् शैवज्ञानसोपानपद्धतिक्रमसमारोहणेन अनुत्तरोर्ध्वधामा-भिलाषुका ज्ञानाग्निदग्धेषु कर्मसु सत्स्वपि दण्डापगमे चक्रभ्रमिवत् यावत्प्रारब्धकर्मोपभोगं प्राणतत्संबद्धभूतकञ्चुकात् नैव निवर्तते इत्यर्थः ।

---

पं० २ कः पु० संसिद्ध्यै प्राह चात्र तामिति, ख. पु० स्वसिद्धिं प्राह चात्र तामिति पाठः ।

यस्मात्प्राणः प्राणसमः समर्थः सर्वसिद्धिदः ।
श्रीमत्स्वच्छन्दतन्त्रान्तर्गीतमेतच्छिवेन तु ॥
प्राणः प्राणमयः प्राणो विसर्गापूरणं प्रति ।
प्राणनाडीजयश्चैव सानुषङ्गिक ईरितः ॥
यस्माच्छिवमयः शुद्ध आत्मा स्वच्छन्द इत्यतः[४५] ॥४४॥

---

एवमस्मिन्प्रकरणत्रयेऽथ विभुनोदितः ॥
उपायघटनाबन्धस्तत्र सिद्धान्तमाह च ।

---

४५ पतिभावप्राप्तौ स्वात्मसिद्धिघनाभ्यसनार्थं प्राणात्मानाहतशब्द-ब्रह्मोपासनां निर्दिशति नासिकान्तरिति, द्वादशान्तादिषु प्राणार्कास्त-मनस्थानेषु युक्तचेतसां योगिनामभ्यासातिशयपरिचयात् इडादिमार्ग-त्रयसृतस्य क्रोडीकृतबिन्दुनादस्य प्राणस्य विलयात् नाडीजयः संपद्यते । प्राणवृत्त्युपरतौ अनाहतब्रह्मणि चेतोवृत्तिविश्रान्तेः स्पष्टतत्प्रत्ययैकता-प्रवाहवशात् तन्मयीभूतत्वात् ध्यात्रादिभेदविगलनतः परमस्वात्म-शिवोदयः । एवं साध्यसिद्धौ आणवोपायनिर्दिष्टोच्चारादिषु अधरपदो-पासाविश्रान्त्या अलंप्राप्तोर्ध्वपदस्य अर्वाचीनपदान्तरानपेक्षणात् इति कारिकासमुदायाशयः ।

---

पं० ४ क. ख. पु० सानुषङ्गिकमीरित इति पाठः ।

पं० ६ क. पु० प्रकरणे येऽत्राप्यविभुना इति, ख. पु० विभुबोधित इति पाठः ।

भूयः स्यात्प्रतिमीलनम् ॥ ४५ ॥

इत्थमुक्तदृशैवेदं जगदिच्छाविजृम्भितम् ।
सर्वं विभोरतो मायाशक्तिवीर्यादणुः पृथक् ॥
आत्मानं बुबुधे भूयः प्रोक्तरीत्युपदेशतः ।
कालुष्यप्रक्षयेण स्यात्प्रतिमीलनमीश्वरे ॥
अपृथग्भावमापन्नो यदसौ परमेश्वरे ।
तदसौ परिपूर्णैकघनानन्दः शिवो भवेत् ॥ ४५ ॥
इति संक्षेपतः सम्यक् सूत्रवार्तिकमुत्तमम् ।
शतत्रयेण श्लोकानां नवत्या चोपवर्णितम् ॥

---

४६ इत्थमुक्तशैवप्रक्रियायाः सारसंक्षेपोऽत्र निर्दिश्यते भूय इति, संविन्मयानुत्तररूपः परमशिव एव स्वेच्छावीर्याक्रमणात् शिवशक्त्यादिपल्लवोद्गमान् विस्फार्य शुद्धाध्वानमधिष्ठितः । एतावति अध्वनि निजचिद्घनस्वभावादप्रच्युतः, अधराध्वनि तु स्वरूपविस्मरणात्मक्रीडाप्रदर्शनाशयेन मायाप्रमातृतामधिश्रितो विश्वनाट्यमभिनयति । स एव तीव्रतमशक्तिपाताविर्भूतज्ञानक्रियात्मालुप्तशक्तिविभवः शैवज्ञानपद्धत्या क्षेत्रज्ञभावं निमज्ज्य कालुष्यप्रक्षये परिपूर्णचिदानन्दघनानुत्तरपरमशिवीभावमुन्मज्ज्य स्वस्थितिं प्रत्यापद्यते इति शम् ॥

---

पं० १ क. ख. पु० जगदिच्छा विजृम्भते इति पाठः ।
पं० ४ क. पु० प्रतिमीलनमीश्वरैः इति पाठः ।

इति प्रकरणत्रयं सुघटमीषदुन्मीलितं
मया शिवमुखोद्गतं सुमतिसिद्धये सांप्रतम्।
विचार्य गतमत्सरबुधैर्जनैर्गुणग्राहिभिः
सुसेव्यमिह तेष्वलं भवतु सिद्धिमोक्षप्रदम् ॥

---

इति काश्मीरिक-श्रीमदाचार्यभट्टदिवाकरात्मज-भट्टश्री-
भास्कर-विरचिते शिवसूत्रवार्तिके विभूतिस्पन्दा-
ख्यस्तृतीयः प्रकाशः ॥ ३ ॥

समाप्तश्चायं शिवसूत्रवार्तिकाख्यो ग्रन्थः ॥
श्रीशिवार्पणं भूयात् ॥

---

पं० १ क. पु० प्रकरणत्रये इति पाठः।

अथ

## अकारादिक्रमेण शिवसूत्रवार्तिकग्रन्थ-सूत्राणां सूची ।

इति शिवसूत्रवार्तिकसूत्राणामकारादि-
क्रमसूची समाप्ता ।

—

अथ

# शिवसूत्रवार्तिकान्तर्वर्तिनां पारिभाषिकपदानां विवरणम् ।

| पृ०सं० | | |
|---|---|---|
| ८८ | अणुः | संकुचितप्रमाता । परिमितत्वात् अणुः । |
| २४ | अनुभवभूः | प्रकाशभूमिः । चिच्छक्तिः |
| ७५ | अन्धतामिस्रः | मरणत्रासः । |
| ७ | अम्बा | पराभट्टारिका । शशाङ्कशकलाकारा शक्तिः । |
| २४ | अर्कः | ज्ञानशक्तिः । ज्ञानशक्तिः प्रभोरेषा तपत्यादित्यविग्रहा । इति (त०) । प्रमाणम् प्राणः । |
| ३२ | अलंग्रासयुक्तिः | प्रशमविशेषः । यत्र अलमत्यर्थं सार्वात्म्येन सृष्ट्या- |

| पृ०सं० | | |
|---|---|---|
| | | सूत्रात्मा परामर्शः। (त० ३ आ० ) |
| २४ | इन्दुः | क्रियाशक्तिः । प्रमेयः । अपानः । |
| २३ | ईशानी | इष्यमाण स्फुटसमापत्तिमती अक्षुब्धेच्छाशक्तिः। यद्वा वैष्णव्यपरपर्याया शक्तिः । |
| ४५ | ईश्वरतत्त्वम् | प्रेर्यत्वम्, तस्यैव भेदप्रथाप्ररोहणायां प्रेषणाहेतुत्वात् । |
| ६४ | उद्बुभूषा | आद्यकोटिः । |
| ८ | उद्यमः | प्रसरद्रूपाया विमर्शमय्याः संविदो झगिति उच्छलनात्मकपरप्रातिभोन्मज्जनम् । |
| ८ | उद्योगः | उन्मेषः । उद्यमः । सृष्टिः । इच्छाशक्तिः । |
| ८ | उन्मेषः | उद्योगः । |

| पृ०सं० | | |
|---|---|---|
| ४७ | उल्लङ्घनवृत्तिः | शक्तिसंकोचः । |
| ३५ | औन्मनसं धाम | शांभवपदम् । |
| ८४ | कञ्चुकम् | पाशः । अवृतिः । मायादिनियत्यन्तं तत्त्वजालम् । |
| ४६ | कलाः | तत्त्वानि । तत्त्वानां स्वसामर्थ्यम् । आदिक्षान्त वर्णसमूहः (६पृ०) । निवृत्त्यादयः । |
| ५ | कलाचक्रम् | मातृचक्रम् । शक्तिचक्रम् देवीचक्रम् । रश्मिचक्रम् । आदिक्षान्तवर्णसमूह ः । |
| ४४ | कलातत्त्वम् | किंचित्कर्तृत्वसामर्थ्यम् । |
| ४४ | कर्मेन्द्रियगणः | अक्षैर्भिन्नं कर्तृत्वम । |
| ४४ | कालतत्त्वम् | इदानीन्तनभावे आकलनम् । |
| २३ | क्रियाशक्तिः | विश्वाकारवैचित्र्यधारित्वयोग्यता । |

| पृ०सं० | | |
|---|---|---|
| ३४ | खेचरी | मुद्राविशेषः,येन चिद्गगनाभोगे गतिर्भवति । शिवावस्था । |
| २४ | गुणस्पन्दाः | सत्त्वादिवृत्तयः । |
| ४४ | गुणाः | सुखदुःखविमोहित्वानि । |
| ३५ | गुरुः | शांभवी अनुग्रहशक्तिः । |
| ३५ | चक्रम् | कलासमूहः । |
| ७२ | चक्रेश्वरः | मातृगणेश्वरः । |
| ५८ | चण्डः | मध्यप्राणः । |
| ११ | जाग्रत् | ग्राह्यग्रहणग्रहीतृरूपा ऐन्द्रियज्ञानशक्तिः । |
| ७६ | जाड्यम् | मोहः । |
| २३ | ज्ञानशक्तिः | आमर्शात्मता (तं-सा० २आ०) |
| ७ | ज्येष्ठा | संहारात्मशक्तिविशेषः,यया सुप्रबुद्धानां शिवीभावापत्तिः । तदुक्तम् ज्येष्ठा स्वातन्त्र्यलेशं तु तनुते ज्ञान कर्मणोः । |

| पृ०सं० | | |
|---|---|---|
| | | इति० (तं० ६ आ०) |
| | | ज्येष्ठा शिवमयी यतः । |
| | | इति च (मू० तं० ६ आ०) |
| ४३ | तत्त्वम् | विशेषरूपाणां वर्णानामेकीकरणकारणं, सामान्य-संवित् । |
| ४४ | तन्मात्रकगणः | शब्दमात्राद्यवभासित्वम् । |
| ७५ | तमः | आत्माभिमानः । |
| ७५ | तामिस्रः | कुटुम्बादिबाधाकर्तरि अमर्षणम् । |
| २२ | तुर्यभूः | स्वस्वरूपैकघनताविमर्शः । |
| ८६ | दक्षिणमार्गः | सूर्यमार्गः । |
| ३७ | दिव्यदेहः | परदेहः । |
| १८ | दिव्यमुद्रा | खेचरीमुद्रा । |
| ७० | दीक्षा | संस्कारविशेषः, स्वरूपज्ञप्तिदान-पाशक्षपणात्मा । |
| २७ | दृक् | प्राणशक्तिः । प्रकाशशक्तिः । |

| पृ०सं० | | |
|---|---|---|
| ७ | देव्यः | शक्तयः । |
| ८३ | द्रष्टृधरा | अभिलाषोद्गतेः पूर्वा कोटिः । |
| ८६ | द्वादशान्तः | प्राणापानयोः विश्रान्तिस्थानम् । |
| ४४ | धीतत्त्वम् | मन्त्रृता । |
| ८६ | नादः | अपानः । |
| ८६ | नासा | अन्तर्द्वादशान्तः । |
| ६ | निमेषः | शक्तिचक्रस्य स्वात्मनि विलीनतापादनम् |
| ४४ | नियतितत्त्वम् | ममेदं कर्तव्यं पुण्यहेतुत्वात्, नेदं कर्तव्यमपुण्यकारणत्वात् इति नियत्यात्मकता । |
| २१ | निरानन्दः | प्रमातृसंमतादानन्दात् निष्क्रान्तो दशाविशेषः (त० ५ आ० )। |
| ६४ | निष्कलजपः | प्रणवाङ्गपरामर्शः । |

| पृ०सं० | | |
|---|---|---|
| १३ | पतिः | शुद्धाध्वप्रमाता मन्त्रादिरूपः। मुक्ताणुः शक्तिभिरनावृतस्वस्वभावः। |
| ८० | पदम् | जाग्रदादि। |
| ३८ | परदेहः | परप्रमातृभावः। |
| २१ | परानन्दः | परेण प्रमेयेन कृत आनन्दविशेषः ( त० ५ आ० ) |
| ८ | परिस्पन्दः | असांकेतिकः पराहंपरामर्शः |
| ५८ | पवमानः | मध्यमप्राणशक्तिः। |
| १६–७७ | पशुः | अणुः। जीवः। कर्मात्मा। आणवादिपाशबद्धः (८४ वृ० )। |
| ६० | पशुमातरः | घोराभिधाः शक्तयः। |
| ४४ | पाञ्चभौतिकगणः | भिन्नशब्दादितोद्वृत्तत्वम्। |
| ५२ | पुर्यष्टकम् | सूक्ष्मदेहः। |
| ६८ | पौद्गलजपः | अजपापरामर्शः। |
| २३ | प्रक्रियादेहः | अधिकारशरीरम्। |

| पृ०सं० | | |
|---|---|---|
| २० | प्रतिभालोकः | दृक्क्रियारूपिणी शिवस्य शक्तिः । |
| ४४ | प्रधानतत्त्वम् | सुखदुःखादिज्ञानस्य साम्यावस्था । |
| ८३ | प्रबुद्धः | द्रष्टृधरानिवासी । |
| ४८ | प्रभुशक्तिः | स्वातन्त्र्यशक्तिः । |
| ६५ | प्राणः | परनादः । |
| २१ | प्रोल्लासभूमिः | महानन्दः । आत्मचैतन्यावस्था । |
| १५ | बिन्दुः | अविभक्तः शिवप्रकाशः । यद्वा भ्रूमध्यादौ प्रदेशे ध्यानाभ्यासप्रकर्षेण प्रवर्धमानोत्तरोत्तरः तेजोविशेषः । |
| ८६ | बिन्दुः | प्राणः । |
| ५७ | बीजम् | चिदात्मा । |
| ८३ | बुद्धः | द्रष्टृधराक्रमणशीलः प्रमाता । |
| ४४ | बुद्धीन्द्रियगणः | अक्षैर्विशेषितं ज्ञत्वम् । |

| पृ०सं० | | |
|---|---|---|
| ८ | भैरवः | परमशिवः, भरणरवणवमनस्वभावत्वात् । |
| ६३ | भैरववृत्तिः | शक्तिविकासः |
| ५८ | मत्स्यवलनम् | अधःशक्तिः । |
| ४४ | मनः | अन्तप्रयोक्तृता । |
| ३० | मन्त्रः | परप्रमाता। चिच्छक्तेः स्वस्वभावः (३१ पृ०) |
| २७ | मन्त्रवीर्यम् | परावाक्परामर्शः । |
| ३७ | मन्त्रेन्द्रता | मन्त्रेश्वराख्यप्रमातृभावः । |
| १४ | मरीचिः | शक्तिः । गुणस्पन्दः । |
| २१ | महानन्दः | महान् प्रमाणादिदशाधिशायिनिरानन्दादिवैलक्षण्यात् उत्कृष्टः प्रमातृसंमत आनन्दविशेषः (त० ५ आ०) |
| ७५ | महामोहः | पुत्रादिषु आत्माभिमानः। |
| २६ | महाह्रदः | शुद्धचिदात्मा, विश्वलहरीप्रसरणाश्रयत्वात् । |

| पृ०सं० | | |
|---|---|---|
| ७ | मातरः | योगिनीगणः । शक्तयः । रश्मयः । कलाः । देव्यः । |
| ७ | मातृका | ज्ञानाधारभूता शक्तिः । विश्वजननी परावाक्शक्तिः । |
| १३ | माया | स्वाङ्गकल्पेषु भावेषु विभेद-बुद्धिः । मीनाति हिनस्ति इति मायाशक्तिरुच्यते (त० ६ आ०) । स्वरूपगो-पनशीला शक्तिः (त० ५ आ०) कलादितत्त्वानाम-विवेकः (४५ पृ०) |
| ६ | मायीयमलः | अहं ममेदमिति भेदप्रथा-त्मकं ज्ञानम् । भिन्नवे-द्यप्रथा (ई० प्र० ३।१ आ०) |
| ६० | माहेश्वर्याद्याः | परादिभेदभिन्नाः शक्तयः । |
| ३३ | मुद्रावीर्यम् | खेचर्यवस्था । |
| ७६ | मूर्छा | मोहः । देहात्मता । |

| पृ०सं० | | |
|---|---|---|
| २३ | मूर्तिः | स्फुटतमक्रियाशक्तिः । शूलशक्तिः। योगेशीशक्तिः। |
| २४ | मूर्तिक्रियायोगः | भुवनादिरूपो मन्त्रादिरूपो वा अध्वा । अमूर्तायाः सर्वगत्वान्-निष्क्रियायाश्च संविदः। मूर्तिक्रियाभासनं यत् स एवाध्वा महेशितुः । इति (त० ५ आ०)। |
| ७५ | मोहः | देहात्मभावः । |
| ७६ | मौर्ख्यम् | मोहः । देहात्मभावः । |
| ६ | योनिः | शक्तिः, सा चतुर्धा—अम्बा-ज्येष्ठा-रौद्री-वामाभिधैः भेदैः। मायाशक्तिः (६१ पृ०) |
| ७ | रश्मयः | शक्तयः । चिद्भैरवस्य वृत्तयः (७१पृ०) । |
| ४४ | रागतत्त्वम् | इदमेव इष्टमस्ति इत्याकलनम् । पाशः । बन्धनम् । |

| पृ०सं० | | |
|---|---|---|
| ७ | रौद्री | स्थित्यात्मिका शक्तिः, यया बुभुक्षूणां शिवीभावौन्मुख्येन संसार एवावस्थानम् । तदुक्तम् रौद्री सांसारिकानन्दं कदाचिद्वितरेदपि । इति (त० ६ आ०) द्रावयित्री रुजां रौद्री रोद्ध्री चाखिलकर्मणाम् इति (मू० त० ६ आ०) |
| २१ | लाभभूमिः | परानन्दः । पराशक्त्यवस्था । |
| २१ | लोकः | वस्तुग्रामः । ग्राहकवर्गः । शुद्धचित्प्रकाशः । |
| ३१ | वाचकम् | मन्त्रादि । |
| ३१ | वाच्यम् | कलादि । |
| ८६ | वाममार्गः | सोममार्गः । |
| ७ | वामा | सृष्ट्यात्मिका शक्तिः, यया संसारिणामधोधःपातो |

पृ०सं०

| | | |
|---|---|---|
| | | भवेत् । |
| | | वामा संसारवमना इति (मू० त० ६ आ०) तदुक्तम् अणुस्वरूपादृश्वानं वामाधो विनिपातयेत् । इति (त० ६ आ०) । |
| ३२ | वामा | विजिज्ञास्योन्मेषाच्छुरिता यामलशक्तिः । स्फुटतर-शृङ्गाटशक्तिः। शूलशक्तिः। योगेशीशक्तिः । |
| २३ | विज्ञानदेहाख्याः | (विज्ञानदेहो विशुद्धसंविन्मात्रमूर्तिः महेश्वरः आख्यायते प्रत्याभिज्ञायते याभिः इति विज्ञानदेहाख्याः) सौम्यशक्तयः । |
| २० | वितर्कः | (विश्वात्मा शिव एवास्मि इति) विचारः । |
| ३१ | विद्या | शुद्धचिन्मात्रतावेशात् |

| पृ०सं० | | |
|---|---|---|
| | | सहसोन्मेषः । स्वप्रकाशविकासः । |
| ४४ | विद्यातत्त्वम् | किंचिज्ज्ञानसामर्थ्यम् । |
| ६४ | विश्रामः | अन्नकोटिः । |
| २१ | विश्रामभूमिः | निरानन्दः । शिवावस्था । |
| ७८ | विश्वमातरः | माहेश्यादिशक्तयः । |
| १४ | वीरेशः | मरीचिनिचयस्य ग्रासकर्ता । (यद्वा गुणस्पन्दानां भोक्तृत्वेन चमत्करणात्) पतिप्रमाता । |
| ३६ | वीर्यम् | परा विमर्शशक्तिः । ज्ञत्वकर्तृत्वशक्तिः (५६ पृ०) |
| १२ | वृत्तिः | जाग्रत् । |
| ७ | शक्तयः | मातरः । माहेश्वर्याद्याः । कलाः । रश्मयः । अघोराद्याः शक्तयः । परापराद्याः । चिदादयः (७१ पृ०) । |
| ५ | शक्तिः | स्वातन्त्र्यम् । पराशक्तिः । |

| पृ॰सं॰ | | |
|---|---|---|
| ६ | शक्तिचक्रम् | खेचर्यादिचक्रम्। सृष्ट्यादिदेवीचक्रम्। विश्वम्। इन्द्रियवर्गः। मन्त्रगणः। मुद्रागणः। चिदादिशक्तयः। |
| ४५ | शक्तितत्त्वम् | दृक्क्रियासंघट्टात्मा दशाविशेषः। |
| ६६ | शक्तिपातः | शिवरश्मिस्पर्शः (यस्य आपतने यथार्करश्मिस्पृष्टः सूर्यकान्तः स्वकामभिज्वलनलक्षणां क्रियां समाविशेत् तथा अणुरपि शिवशक्तिपातपूतः स्वके पूर्णे ज्ञानक्रिये, समभिव्यक्तस्व सांविद्विभवो भवेदित्यर्थः)। |
| ६८ | शाक्तजपः | पराहंभावपरामर्शः। |
| ४५ | शिवतत्त्वम् | स्वज्योतिष्ट्वम्। |
| ५८ | शुचिः | उदानः। |
| १८ | शुद्धतत्त्वम् | परमशिवः। |

| पृ०सं० | | |
|---|---|---|
| ४५ | शुद्धविद्या | कलादितत्त्वानां विवेकः । शिवशास्त्रादिबोद्धृत्वम् । स्वातन्त्र्यशक्तिः (२५ पृ०)। भेदाभेदमयी तत्त्वदशा । |
| ८२ | संवाह्यः | कर्मात्मा । पशुः । |
| ३६ | संवेदनम् | आद्योऽनुभवः । |
| ४५ | सदाशिवतत्त्वम् | सर्वज्ञानक्रियावत्त्वयोग्यता। |
| १५ | समाधिव्यक्तयः | योगभूमिकाः । |
| २२ | समाधिसुखम् | पदद्वये स्वात्मविकासप्रमोदः। |
| १३ | सुषुप्तता | ज्ञानज्ञेयशक्तेरनुदये चिद्रूपस्य अविवेकः । |
| २७ | सोमांशः | प्रमेयभागः । अपानः । |
| १८ | सौषुप्तव्योम | हृदयम् । |
| ८६ | सौषुम्नमार्गः | मध्यवाहः । |
| ३६ | स्पर्शः | परसंवित्साक्षात्कारः(त०५ आ०) । |
| २४ | स्पर्शभूः | आह्लादः। आनन्दशक्तिः । सुखादिसंबन्धिन्या आद्यायाः |

| पृ०सं० | | |
|---|---|---|
| | | संविदो यत् आद्यं संवेदनं स नाम अनुत्तरसंविदः स्पर्शभूः, परसंवित्साक्षात्कारः (त०५ आ०)। |
| ८७ | स्वच्छन्दः | स्वतन्त्रः। शिवः। |
| १२ | स्वप्नः | बाह्यार्थविषयाभावे अन्तर्विकल्पानां नवनवोदयः। |
| ५५ | स्वातन्त्र्यम् | प्रभुशक्तिः। |
| ६८ | हंसजपः | नादकलापरामर्शः। |
| २३ | हार्दी | सिद्धयोगिनीमेलापशक्तिः। याम्या शक्तिः। |
| ५८ | ह्रदः | चिदात्मा। |

इति शिवसूत्रवार्तिकान्तर्वर्तीनि पारिभाषिकपदानि सविवरणानि समाप्तानि॥

---

ओं नमः सच्चिदानन्दात्मने

अथ

# शिवसूत्रवृत्तिः ॥

---

## प्रथमोन्मेषः ।

---

### चैतन्यमात्मा ॥ १ ॥

चेतयते इति चेतनः सर्वज्ञानक्रियास्वतन्त्रः तस्य भावश्चैतन्यं सर्वज्ञानक्रियासम्बन्धमयं परिपूर्णं स्वातन्त्र्यम् उच्यते, एतदेव आत्मा, न पुनः शरीर-प्राण-बुद्धि-शून्यानि लौकिकाद्यभ्युपगतानि ।

किंच यदेतत् चैतन्यमुक्तं स एव आत्मा स्वभावो भावाभावरूपस्य जगतः । तदुक्तं श्रीमदुच्छुश्मभैरवे

'यावन्न वेदका एते तावद्वेद्याः कथं प्रिये ।
वेदकं वेद्यमेकं तु तत्त्वं नास्त्यशुचिस्ततः ॥'

इति ॥ १ ॥

ज्ञानं बन्धः ॥ २ ॥

विषयज्ञानं बन्धः । अथवा अकारप्रश्लेषेण अज्ञानं बन्धः ।

'मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।'

इति श्रीमालिनीविजये ॥ २ ॥

योनिवर्गः कलाशरीरम् ॥ ३ ॥

मायाप्रपञ्चोऽपि बन्धः; कार्मं मलमपि बन्धः; कला व्यापारः, किञ्चित्कर्तृत्वम् ॥ ३ ॥

ज्ञानाधिष्ठानं मातृका ॥ ४ ॥

अकारादि-क्षकारान्तं मातृकारूपम्

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥
वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥'

मातृकाधिष्ठानादेव हि अन्तरभेदानुसन्धिबन्ध्यत्वात् क्षणमपि अलब्धविश्रान्तीनि बहिर्मुखान्येव ज्ञानानि ॥ ४ ॥

उद्यमो भैरवः ॥ ५ ॥

विमर्शमय्याः संविदो नवनवस्वरूपप्रथनरूपः उद्यमः, भैरवात्मकस्वस्वरूपाभिव्यक्तिहेतुः ॥ ५ ॥

शक्तिचक्रसंधाने विश्वसंहारः ॥ ६ ॥

शक्तिचक्रं

'शक्तयोऽस्य जगत्कृत्स्नं.........।'

इति । तस्य अनुसंधाने अन्तर्विमर्शने सति विश्वसंहारः परसंविदग्निसाद्भावः ॥ ६ ॥

जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः ॥ ७ ॥

भेदे नानारूपे पृथक्त्वावभासे, स्फुरत्तात्मनः तुर्यस्य आभोगः चमत्कारः, तस्य संभवो नित्यं प्रोक्तयोगयुक्तस्य भवति ॥ ७ ॥

ज्ञानं जाग्रत् ॥ ८ ॥

सर्वसाधारणार्थविषयं बाह्येन्द्रियजं ज्ञानम् ॥ ८ ॥

स्वप्नो विकल्पाः ॥ ९ ॥

मनोमात्रजन्या असाधारणार्थविषया विकल्पाः स्वप्नः ॥ ९ ॥

अविवेको मायासौषुप्तम् ॥ १० ॥

विवेचनाभावः अख्यातिः, एतदेव मायामयं सौषुप्तम् ॥ १० ॥

त्रितयभोक्ता वीरेशः ॥ ११ ॥

जाग्रदादित्रयस्य स्वातन्त्र्येण चमत्कर्ता ॥ ११ ॥

विस्मयो योगभूमिकाः ॥ १२ ॥

परतत्त्वैक्याध्यारोहविश्रान्तिसूचिकाः ॥ १२ ॥

इच्छा शक्तिरुमा कुमारी ॥ १३ ॥

योगिन इच्छा परैव पारमेश्वरी स्वातन्त्र्यरूपा शक्तिः, कुमारी विश्वसर्गसंहारक्रीडापरा ॥ १३ ॥

दृश्यं शरीरम् ॥ १४ ॥

बाह्यमाभ्यन्तरं वा यत् दृश्यं, तत् सर्वम् अस्य अहमिदम् इति स्वाङ्गकल्पं स्फुरति, न भेदेन ॥१४॥

हृदये चित्तसंघट्टाद् दृश्यस्वापदर्शनम् ॥ १५ ॥

चित्प्रकाशे, चलतः चित्तस्य एकाग्रभावनात् दृश्यस्य नील-देह-प्राण-बुद्ध्यात्मनः स्वापस्य च एतदभावरूपस्य शून्यस्य दर्शनं यथावस्तु स्वाङ्ग-कल्पं भवति ॥ १५ ॥

शुद्धतत्त्वानुसंधानाद्वा अपशुशक्तिः ॥१६॥

परमशिवाख्ये तत्त्वे यदा विश्वम् अनुसन्धत्ते तन्मयमेव एतत् इति, तदा अविद्यमाना पश्वाख्या बन्धशक्तिः यस्य, तादृक् अयं सदाशिववत् जगतः पतिर्भवति ॥ १६ ॥

वितर्क आत्मज्ञानम् ॥ १७ ॥

विश्वात्मा शिव एव अस्मि–इति यो वितर्को विचारः एतदेव आत्मज्ञानम् ॥ १७ ॥

लोकानन्दः समाधिसुखम् ॥ १८ ॥

लोक्यते इति लोको वस्तुग्रामो, लोकयति इति च लोको ग्राहकवर्गः, तस्मिन् स्फुरति सति, प्रमातृपदविश्रान्त्यवधानात् तच्चमत्कारमयो य आनन्द एतदेव अस्य समाधिसुखम् ॥ १८ ॥

शक्तिसंधाने शरीरोत्पत्तिः ॥ १९ ॥

पूर्वोक्तेच्छाशक्तितन्मयीभावे तद्वशेन यथाभिमतं शरीरम् अस्य उत्पद्यते ॥ १९ ॥

भूतसन्धान-भूतपृथक्त्व-विश्वसंघट्टाः ॥ २० ॥

भूतानां शरीरप्राणादीनाम्, आप्यायनादौ सन्धानं परिपोषणं, व्याध्याद्युपशमादौ तत्सकाशात् पृथक्त्वं शरीरादेर्विश्लेषणं, देशकालादिविप्रकृष्टस्य च विश्वस्य संघट्टो ज्ञानविषयीकार्यत्वम्, अस्य पूर्वोक्तशक्तिसंधाने सति जायते ॥ २० ॥

शुद्धविद्योदयाच्चक्रेशत्वसिद्धिः ॥ २१ ॥

विश्वात्मप्रथावाञ्छया यदा शक्तिं सन्धत्ते, तदा अहमेव सर्वम्—इति विश्वात्मकशुद्धविद्योदयात् स्वशक्तिचक्रेशत्वरूपं माहेश्वर्यमस्य सिद्ध्यति ॥ २१ ॥

महाह्रदानुसंधानान्मन्त्रवीर्यानुभवः ॥ २२ ॥

परा संविदेव स्वच्छत्वानावृतत्वगम्भीरत्वादिधर्मयोगात् महाह्रदः, तस्य अनुसंधानात् अन्तर्मुखतया अनारतं तत्तदात्म्यविमर्शनात्, मन्त्राणां वीर्यभूतस्य पूर्णाहन्ताविमर्शमयस्य महामन्त्रस्य, अनुभवः स्वात्मरूपतया स्फुरणं भवति ॥ २२ ॥

इति श्रीशिवसूत्रवृत्तौ शांभवोपायप्रकाशनं नाम प्रथम उन्मेषः ॥१॥

## द्वितीयोन्मेषः ।

---

### चित्तं मन्त्रः ॥१॥

मन्त्रदेवताविमर्शपरत्वेन प्राप्ततत्सामरस्यम् आराधकचित्तमेव मन्त्रः ॥१॥

### प्रयत्नः साधकः ॥२॥

अकृतको यः प्रयत्नः, स एव साधको मन्त्रयितुर्मन्त्रदेवतातादात्म्यप्रदः ॥२॥

### विद्याशरीरसत्ता मन्त्ररहस्यम् ॥ ३ ॥

विद्याशरीरस्य शब्दराशेः, सत्ता अशेषविश्वाभेदमयपूर्णाहंविमर्शात्मा स्फुरत्ता, सा मन्त्राणां रहस्यम् उपनिषत् ॥ ३ ॥

### गर्भे चित्तविकासोऽविशिष्टविद्या स्वप्नः ॥४॥

गर्भे मन्त्रसिद्धिप्रपञ्चे चित्तविकासः तावन्मात्रे सन्तोषः, सर्वजनसाधारणी विद्या किञ्चिज्ज्ञत्वरूपा अशुद्धविद्या, सैव स्वप्नो भेदनिष्ठो विचित्रो विकल्पात्मा भ्रमः । तदुक्तं पातञ्जले

'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' (३–३७)।

इति ॥ ४ ॥

विद्यासमुत्थाने स्वाभाविके खेचरी शिवावस्था ॥ ५ ॥

पराद्वयप्रथारूपशुद्धविद्योदये, खे बोधगगने चरति इति खेचरी मुद्रा अभिव्यज्यते ॥ ५ ॥

गुरुरुपायः ॥ ६ ॥

तदत्र मुद्रामन्त्रवीर्यासादने ॥ ६ ॥

मातृका चक्रसम्बोधः ॥ ७ ॥

अनुत्तरानन्देच्छेशनोन्मेषोनतादितत्त्वप्रदर्शनेन चिदानन्दघनस्वस्वरूपसमावेशमयः सम्यक् बोधो भवति । तस्मात् गुरोः प्रसन्नात् शिष्यस्य भवति इति शेषः ॥ ७ ॥

शरीरं हविः ॥ ८ ॥

सर्वैः यत् प्रमातृत्वेन अभिषिक्तं स्थूलसूक्ष्मादि-रूपं शरीरं, तत् महायोगिनः परस्मिन् चिदग्नौ हूयमानं हविः ॥८॥

ज्ञानमन्नम् ॥ ९ ॥

यत् 'ज्ञानं बन्धः' (१-२) इत्युक्तं, तत् अद्यमान-त्वात् योगिनामन्नम् ।

अथ च यत् स्वरूपविमर्शात्मकं ज्ञानं, तत् अस्य अन्नं परिपूर्णतृप्तिकारितया स्वात्मविश्रान्ति-हेतुः ॥ ९ ॥

विद्यासंहारे तदुत्थस्वप्नदर्शनम् ॥ १० ॥

शुद्धविद्यानिमज्जने भेदमयस्य विकल्पप्रपञ्चस्य स्फुटमुन्मज्जनं भवति ॥ १० ॥

इति श्रीशिवसूत्रवृत्तौ शाक्तोपायप्रकाशनं नाम द्वितीय उन्मेषः ॥ २ ॥

---

## तृतीयोन्मेषः

---

### आत्मा चित्तम् ॥ १ ॥

यदेतत् विषयवासनाच्छुरितं, तत् अध्यवसायादिव्यापारबुद्ध्यहंकारमनोरूपं चित्तं, तदेव अतति सत्त्वादिवृत्त्यवलम्बनेन योनीः संचरति इति आत्मा अणुरित्यर्थः ॥ १ ॥

### ज्ञानं बन्धः ॥ २ ॥

'सत्त्वस्थो राजसस्थश्च तमःस्थो गुणवेदकः ।
एवं पर्यटते देही स्थानात् स्थानान्तरं व्रजेत् ॥'

इति ॥ २ ॥

### कलादीनां तत्त्वानामविवेको माया ॥ ३ ॥

किंचित्कर्तृत्वादिरूपकलादिक्षित्यन्तानां तत्त्वानां कञ्चुकपुर्यष्टकस्थूलदेहत्वेन अवस्थितानां योऽयम् अविवेकः पृथक्त्वाभिमतानामेव अपृथक्त्वात्मत्वेन प्रतिपत्तिः सा माया, तत्त्वाख्यातिमयः प्रपञ्चो माया ॥ ३ ॥

## शरीरे संहारः कलानाम् ॥ ४ ॥

शरीरे स्थूले सूक्ष्मे परे वा, कलानां तत्त्वभागानां पृथिव्यादिशिवान्ततत्त्वानां, स्वकारणे लयभावनया संहारो ध्यातव्य इति शेषः ॥ ४ ॥

## नाडीसंहार-भूतजय-भूतकैवल्य-भूतपृथक्त्वानि ॥ ५ ॥

नाडीनां प्राणादिवाहिनीनां मध्यनाड्यां संहारः; भूतानां जयो विलीनतापादनम्; भूतकैवल्यं चित्तस्य ततः प्रत्याहरणम्; भूतपृथक्त्वं तदनुपरक्तस्वच्छस्वच्छन्दाचिदात्मता; एतानि योगिना भावनीयानि इति शेषः ॥ ५ ॥

## मोहावरणात् सिद्धिः ॥ ६ ॥

मोहकृतात् आवरणात् प्रोक्तधारणादिक्रमसमासादितात् तत्तत्तत्त्वभोगासिद्धिर्भवति, न तु परतत्त्वप्रकाशः ॥ ६ ॥

## मोहजयादनन्ताभोगात् सहजाविद्याजयः ॥७॥

मोहस्य मायाया जयात् अभिभवात् कीदृशात् अनन्तः संस्कारप्रशमपर्यन्त आभोगो विस्तारो यस्य तादृशात्, सहजविद्याया जयो लाभो भवति ॥ ७ ॥

जाग्रद् द्वितीयकरः ॥ ८ ॥

जाग्रत् शुद्धविद्यैकध्याप्तौ जागरूको, द्वितीयं पूर्णविमर्शात्मकस्वाहन्तापेक्षया यत् इदन्ताविमृश्यं वेद्याभासात्मकं जगत्, तत् करो रश्मिः यस्य तथाविधो भवति, विश्वमस्य स्वदीधितिकल्पं स्फुरति इत्यर्थः ॥ ८ ॥

नर्तक आत्मा ॥ ९ ॥

नृत्यति अन्तर्निगूहितस्वस्वरूपावष्टम्भमूलं, तत्तज्जागरादिनानाभूमिकाप्रपञ्चं, स्वपरिस्पन्दलीलयैव स्वभित्तौ प्रकटयति; इति नतर्क आत्मा ॥९॥

रङ्गोऽन्तरात्मा ॥ १० ॥

रङ्गः तत्तद्भूमिकाग्रहणस्थानम्, अन्तरात्मा संकोचावभाससतत्त्वः शून्यप्रधानः प्राणप्रधानो वा पुर्यष्टकनियन्त्रितो जीवः । तत्र हि अयं कृत-

पदः स्वकरणपरिस्पन्दक्रमेण जगन्नाट्यमाभासयति ॥ १० ॥

## प्रेक्षकाणीन्द्रियाणि ॥ ११ ॥

संसारनाट्यप्रकटनप्रमोदनिर्भरं स्वस्वरूपम् अन्तर्मुखतया साक्षात् कुर्वन्ति ॥ ११ ॥

## धीवशात् सत्त्वसिद्धिः ॥ १२ ॥

धीः तात्त्विकस्वरूपविमर्शनाविशदा धिषणा, तद्वशात् सत्त्वस्य स्फुरत्तात्मनः सूक्ष्मस्य आन्तरपरिस्पन्दस्य अभिव्यक्तिर्भवति। नाट्ये च सात्त्विकाभिनयसिद्धिः बुद्धिकौशलादेव लभ्यते ॥ १२ ॥

## सिद्धः स्वतन्त्रभावः ॥ १३ ॥

सिद्धः संपन्नः स्वतन्त्रभावः सहजज्ञत्वकर्तृत्वाद्यात्मकम् अशेषविश्ववशीकारि स्वातन्त्र्यम् ॥ १३ ॥

## यथा तत्र तथान्यत्र ॥ १४ ॥

यत्र देहे योगिनः स्वाभिव्यक्तिर्जाता, तत्र यथा तथा अन्यत्र सर्वत्र सदावहितस्य सा भवति ॥ १४ ॥

## बीजावधानम् ॥ १५ ॥

बीजे परशक्त्यात्मनि विश्वकारणे, अवधानं भूयो भूयः चित्तनिवेशनं, कर्तव्यम् इति शेषः ॥१५॥

## आसनस्थः सुखं ह्रदे निमज्जति ॥ १६ ॥

आस्यते नित्यमैकात्म्येन स्थीयते अस्मिन् इति परं शाक्तं बलम् , यस्तत्र तिष्ठति परिहृतपरापरध्यानधारणादिसर्वक्रियाप्रयासो नित्यमन्तर्मुखतया तदेव परामृशति , स सुखम् अनायासतया परामृतसमुद्रे निमज्जति , देहादिसंकोचसंहारब्रोडनेन तन्मयीभवति ॥ १६ ॥

## स्वमात्रानिर्माणमापादयति ॥ १७ ॥

स्वस्य चैतन्यस्य संबन्धिनी मात्रा चिद्रसाश्यानतात्मांशः, तद्रूपं यथेष्टवेद्यवेदकावभासात्मकं निर्माणमापादयति निर्मितत्वेन दर्शयति ॥१७॥

## विद्याविनाशे जन्मविनाशः ॥ १८ ॥

विद्याया अविनाशे सततोन्मग्नतया स्फुरणे, जन्मनः अज्ञानसहकारिकर्महेतुकस्य दुःखमयस्य

देहेन्द्रियादिसमुदायस्य नाशो विध्वंसः संपन्न एव ॥ १८ ॥

कवर्गादिषु माहेश्वर्याद्याः पशुमातरः ॥ १९ ॥

अधिष्ठात्र्यो भवन्ति, इति शेषः । ज्ञानाधिष्ठानं मातृका ( १–४ ) इति सामान्येनोक्तम्, इदं तु प्राप्ततत्त्वोऽपि प्रमाद्यन् माहेश्यादिभिः पशुजनाधिष्ठातृभूताभिरपि शब्दानुवेधनद्वारेण मोह्यते इत्याशयेन इति विशेषः ॥ १९ ॥

त्रिषु चतुर्थं तैलवदासेच्यम् ॥ २० ॥

त्रिषु जागरादिपदेषु, चतुर्थं शुद्धविद्याप्रकाशरूपं तुर्यानन्दरसात्मकं धाम, तैलवत् इति यथा तैलं क्रमेण अधिकमधिकं प्रसरत् आश्रयं प्राप्नोति तथा आसेच्यम् । त्रिष्वपि पदेषु उन्मेषोपशान्त्यात्मकाद्यन्तकोट्योः परिस्फुरता तुर्यरसेन मध्यदशामपि अवष्टम्भयुक्त्या व्याप्नुयात् येन तन्मयीभावमाप्नुयात् ॥ २० ॥

मग्नः स्वचित्तेन प्रविशेत् ॥ २१ ॥

मग्नः शरीरादिप्रमातृतां प्रशमयन् अविकल्पक-रूपेण समाविशेत् ॥ २१ ॥

## प्राणसमाचारे समदर्शनम् ॥ २२ ॥

प्राणस्य बहिः मन्दमन्दप्रसरणे चिदानन्दघनात्मतया एकरूपं संवेदनम् अर्थात् सर्वासु दशासु भवति इत्यर्थः ॥ २२ ॥

## मध्ये ऽवरप्रसवः ॥ २३ ॥

पूर्वापरकोट्योः तुर्यरसमास्वादयतो मध्ये मध्य-दशायाम्, अवरः अश्रेष्ठः भेदप्रथात्मा कुत्सितः सर्गो जायते , न तु सदा व्यामुह्यति ॥ २३ ॥

## मात्रासु स्वप्रत्ययसंधाने नष्टस्य पुनरुत्थानम् ॥ २४ ॥

मात्रासु पदार्थेषु , यदा विश्वम् इदमहम् इति चिद्घनात्मरूपतां सर्वत्र अनुसंधत्ते , तदा पूर्वोक्तावर-प्रसवात् नष्टस्य तुर्यचमत्कारमयस्वभावस्य पुन-रुन्मज्जनं योगिनो भवति इत्यर्थः ॥ २४ ॥

## शिवतुल्यो जायते ॥ २५ ॥

तुर्यपरिशीलनप्रकर्षात् प्राप्ततुर्यातीतपदः, स्वच्छ-स्वच्छन्दचिदानन्दघनेन शिवेन भगवता तुल्यः देहकलाया अगलनात् समो जायते, तद्विगलनेन असौ साक्षात् शिव एव इत्यर्थः ॥ २५ ॥

## शरीरवृत्तिर्व्रतम् ॥ २६ ॥

प्रोक्तदृशा शिवतुल्यस्य योगिनः शिवाहंभावेन वर्तमानस्य, शरीरे वृत्तिर्वर्तनं यत् तदेव व्रतं नियमेन अनुष्ठेयम् अस्य, न पुनस्तस्य देहास्थितिव्यतिरिक्तं व्रतमुपयुक्तम् ॥ २६ ॥

## कथा जपः ॥ २७ ॥

'अहमेव परो हंसः शिवः परमकारणम् ।'

इति नीत्या नित्यमेव पराहंभावनामयत्वात् महामन्त्रात्मकाकृतकाहंविमर्शारूढस्य यत् यत् आलापादि, तत् तत् अस्य स्वात्मदेवताविमर्शानवरतावर्तनात्मा जपो जायते ॥ २७ ॥

## दानमात्मज्ञानम् ॥ २८ ॥

दीयते इति दानम्, आत्मज्ञानम् अनेन अन्तेवासिभ्यो दीयते ॥ २८ ॥

**योऽविपस्थो ज्ञाहेतुश्च ॥ २९ ॥**

पशुमातृवर्गमाहेश्वर्यादिचक्रे प्रभुत्वेन स्थितो यः, स ज्ञानशक्तिहेतुः, उपदेश्यान् ज्ञानशक्त्या बोधयितुं क्षमः । च-शब्दो ह्यर्थे ॥ २९ ॥

**स्वशक्तिप्रचयोऽस्य विश्वम् ॥ ३० ॥**

यतः अयं शिवतुल्य उक्तः ततो यथा

'शक्तयोऽस्य जगत्कृत्स्नम्..............।

इति आम्नायदृष्ट्या शिवस्य विश्वं स्वशक्तिमयम्, तथा अस्यापि स्वस्याः संविदात्मनः शक्तेः प्रचयः क्रियाशक्तिस्फुरणरूपो विकासो विश्वम् ॥ ३० ॥

**स्थितिलयौ ॥ ३१ ॥**

बहिर्मुखत्वावभासनं, चिन्मयप्रमातृविश्रान्तिश्च स्वशक्तिप्रचय, इति अनुवर्तते ॥ ३१ ॥

**तत्प्रवृत्तावप्यनिरासः संवेत्तृभावात् ॥ ३२ ॥**

सृष्ट्यादिभेदोन्मज्जने सत्यपि नास्य योगिनः तुर्यचमत्कारात्मकविमर्शमयात् उपलब्धृत्वात् चलनम् ॥ ३२ ॥

## सुखासुखयोर्बहिर्मननम् ॥ ३३ ॥

वेद्यस्पर्शजातयोः बहिः नीलादिवत् इदन्ताभासरूपतया मननं संवेदनम्, न तु लौकिकवत् अहन्तासंस्पर्शनेन । योगी प्रशान्तपुर्यष्टकप्रमातृभावः कथं सुखासुखाभ्यां स्पृश्यते ॥ ३३ ॥

## तद्विमुक्तस्तु केवली ॥ ३४ ॥

ताभ्यां सुखदुःखाभ्यां विशेषेण मुक्तः संस्कारमात्रेणापि अन्तरसंस्पृष्टः केवली केवलं चिन्मात्रप्रमातृरूपं यस्य ॥ ३४ ॥

## मोहप्रतिसंहतस्तु कर्मात्मा ॥ ३५ ॥

मोहेन अज्ञानेन प्रतिसंहतः तदेकघनः । उक्तं च

'अज्ञानैकघनो नित्यं शुभाशुभकलङ्कितः ।'

इति ॥ ३५ ॥

## भेदतिरस्कारे सर्गान्तरकर्मत्वम् ॥ ३६ ॥

शरीरप्राणाद्यहन्ताभिमानात्मनो भेदस्य, तिरस्कारे चिद्घनस्वभावोन्मज्जनात् अपहस्तने सति, सर्गान्तरकर्मत्वं यथाभिलषितनिर्मेयनिर्मातृत्वं भवति ॥ ३६ ॥

## करणशक्तिः स्वतोऽनुभवात् ॥ ३७ ॥

न च एतत् निर्मेयनिर्मातृत्वमस्यासंभाव्यम् , यतः स्वतः स्वस्मात् एव अनुभवात् संकल्पस्वप्नादौ करणशक्तिः तत्तदसाधारणार्थनिर्मातृत्वम् आत्मनः सिद्धमेव ॥ ३७ ॥

## त्रिपदाद्यनुप्राणनम् ॥ ३८ ॥

त्रयाणां सृष्टिस्थितिलयशब्दोक्तानां भावौन्मुख्यतदभिष्वङ्ग-तदन्तर्मुखीभावनामयानां पदानामवस्थानां, यदादि प्रधानमानन्दघनं तुर्याख्यं पदं मायाशक्त्याच्छादितमपि तत्तद्विषयोपभोगाद्यवसरेषु विद्युद्वदाभासमानं, तेन अनुप्राणनमात्मन उत्तेजनं कुर्यात् ॥ ३८ ॥

चित्तस्थितिवच्छरीरकरणबाह्येषु ॥ ३९ ॥

अन्तर्मुखायां चित्तस्थितौ इव शरीरकरणबाह्याभासात्मिकायां बहिर्मुखतायामपि तेन तुर्येणानुप्राणनं कुर्यात् ॥ ३९ ॥

अभिलाषाद्बहिर्गतिः संबाह्यस्य ॥ ४० ॥

संबाह्यते योनेर्योन्यन्तरं नीयते इति संबाह्यः कर्मात्मरूपः पशुः, तस्य अभिलाषात् अपूर्णंमन्यतात्मकाविद्याख्यानात् मलरूपात् हेतोः बहिर्गतिर्विषयोन्मुखत्वमेव भवति, न तु अन्तर्मुखस्वरूपावहितत्वं जातुचित् ॥ ४० ॥

तदारूढप्रमितेस्तत्क्षयाज्जीवसंक्षयः ॥ ४१ ॥

तस्मिन् तुर्यपदे आरूढा तद्विमर्शपरा प्रमितिः संवित् यस्य योगिनः, तस्य अभिलाषक्षयात् जीवस्य संबाह्यात्मनः पुर्यष्टकप्रमातृभावस्य, संक्षयः प्रशमः संजायते चिन्मात्रमयतयैव स्फुरति स इत्यर्थः ॥ ४१ ॥

भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः परः ॥ ४२ ॥

तदा—इति अभिलाषक्षयात् जीवसंक्षये पुर्यष्टकप्रमातृताभिमानविगलने सति, अयं भूतकञ्चुकी शरीरारम्भीणि भूतानि कञ्चुकं व्यतिरिक्तं प्रावरणमिव न तु अहन्तापदस्पर्शीनि यस्य, तथाभूतः सन् विमुक्तो निर्वाणभाक्, यतो भूयो बाहुल्येन पतिसमः चिद्घनपारमेश्वरस्वरूपाविष्टः, तत एव परः पूर्णः । शरीरवृत्तिर्व्रतम् ( ३-२६ ) इति उक्तसूत्रनीत्या दलकल्पे देहादौ स्थितोऽपि न प्रमातृतासंस्कारेण स्पृष्टः ॥ ४२ ॥

**नैसर्गिकः प्राणसंबन्धः ॥ ४२ ॥**

निसर्गात् स्वातन्त्र्यात्मनः स्वभावादायातो नैसर्गिकः प्राणसंबन्धः, संवित् किल भगवती विश्ववैचित्र्यमवबिभासयिषुः, संकोचावभासपूर्वकं संकुचदशेषविश्वस्फुरत्तात्मकप्राणनारूपग्राहकभूमिकां श्रित्वा, ग्राह्यरूपजगदाभासात्मना स्फुरति,—इति नैसर्गिकः स्वातन्त्र्यात् प्रथममुद्भासितः अस्याः प्राणसंबन्धः ॥ ४३ ॥

**नासिकान्तर्मध्यसंयमात् किमत्र सव्यापसव्यसौषुम्नेषु ॥ ४४ ॥**

सर्वनाडीचक्रप्रधानरूपेषु सव्यापसव्यसौषुम्नेषु दक्षिण-वाम-मध्यनाडीपदेषु या नासिका, नसते कौटिल्येन वहति इति कृत्वा कुटिलवाहिनी प्राणशक्तिः, तस्या अन्तरिति आन्तरी संवित् , तस्या अपि मध्यं सर्वान्तरतमतया प्रधानं यद्विमर्शमयं रूपं तत्संयमादन्तर्निभालनप्रकर्षात् किमत्रोच्यते । अयं हि सर्वदशासु देदीप्यमानो निर्व्युत्थानः परः समाधिः ॥ ४४ ॥

भूयः स्यात्प्रतिमीलनम् ॥ ४५ ॥

चैतन्यात्मनः स्वरूपादुदितस्य अस्य विश्वस्य, भूयः पुनः, विगलितभेदसंस्कारात्मना बाहुल्येन च प्रतिमीलनं चैतन्याभिमुख्येन मीलनं, पुनरपि चैतन्यात्मस्वरूपोन्मीलनरूपं परयोगाभिनिविष्टस्य योगिनो भवति ॥

इति शिवम् ॥ ४५ ॥

इति श्रीशिवसूत्रवृत्तौ आणवोपायप्रकाशनं नाम तृतीय उन्मेषः ॥ ३ ॥

समाप्तेयं शिवसूत्रवृत्तिः ॥

---

# THE SPANDA KĀRIKĀS

## WITH THE VṚITTI

BY

**KALLAṬA.**

---

अथ

# स्पन्दकारिकाः

## कल्लट-वृत्ति-समेताः




श्रीनगर

( कश्मीर )

---

संवत् १९७०

ओं श्रीचिदात्मवपुषे शंकराय नमः ।

अथ

# स्पन्दकारिकाः ।

श्रीमत्कल्लटाचार्यविरचितवृत्त्युपेताः ।



**यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ ।**
**तं शक्तिचक्रविभवप्रभवं शंकरं स्तुमः[1] ॥ १ ॥**

---

श्रीशिवाद्वैतसद्भावसंभूत्यै भवतात्सदा ।
पर्यायः संगृहीतोऽयं स्पन्दवृत्त्यर्थद्योतकः ॥

१ यथा हि संकल्पोत्पिपादयिषापूर्वकोटाविष्यमाणं वस्तु एषितुरविभिन्नम्, एवमत्र शिवावस्थायां निरवध्यवभासविच्छित्ति-

---

पं० २ क' पु० शंकरं नुम इति पाठः ।

अनेन स्वस्वभावस्यैव शिवात्मकस्य संकल्पमात्रेण जगदुत्पत्तिसंहारयोः कारणत्वं विज्ञानदेहात्मकस्य शक्तिचक्रैश्वर्यस्योत्पत्तिहेतुत्वं नमस्कारद्वारेण प्रतिपाद्यते ॥ १ ॥

**यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।**
**तस्यानावृतरूपत्वान्न निरोधोऽस्ति कुत्रचित् ॥२॥**

---

चित्रं सदाशिवादिपृथिव्यन्तं भावजातमव्यतिरिक्तमास्ते, तदेव शक्तिशब्देन व्यपदेश्यं नित्याव्यभिचरदेकस्वभावे शिवे समवेतं तयोरभेदस्य अभ्युपगतत्वात् । वस्तुतस्तु परा शक्तिरेकैव परिपूर्णाहंपरामर्शशालित्वात् अत्यद्भुतशक्तिपरिस्फुरिते पारमैश्वर्यें मायाशक्त्युद्भावितानन्तवैचित्र्या भावव्यक्तयः अवरपरामर्शौन्मुख्यमात्रोत्पन्नेन तु भेदोपभेदभावमापन्नेन भावराशिना अग्रभासमानतया बहुव्यपदेशा शक्तिशक्तिमतोरभेदाभिप्रायप्रत्यायिका । अयं भावः—शंकरात्मनि तदिच्छयैव विश्वमुन्मीलितं लब्धस्थितिकमपि तच्छक्तिविजृम्भणमात्रं, मायाशक्त्या तु नानावभासि इति तन्नुतिद्वारा तत्समापत्तिराशंस्यते ।

२ नानाविभक्तवेद्यात्मतत्त्वनिचयस्य प्रकाशनस्थितिहेतुतया कर्तृतया च य आधारकारणभूतः प्रमेयसंपर्कासहिष्णुतया अप्रमेयो निरवच्छिन्नमहिमचिन्मात्रैकस्वरूपः स एवेह स्वस्वभावशब्दाभिमतो, न

---

पं० ५ ग० पु० इदं विश्वमिति पाठः ।

कथं पुनः स्वस्वभावस्यैव संसारिणः शिवत्वेन निर्देशः—इति यद्युच्यते, तत् यत्र स्थितम् इदं जगत्, यस्मात् च उत्पन्नं तस्य संसार्यवस्थायामपि अनाच्छादितस्वभावत्वात् न क्वचित् निरोधः, अतः शिवत्वमुच्यते ॥ २ ॥

जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति ।
निवर्तते निजान्नैव स्वभावादुपलब्धृतः ॥३॥

---

तु जातिव्यक्त्यभिमानवतो मायापहृतैश्वर्यसंविदोऽणोः स्वरूपं, तस्य निरुद्धस्वभावत्वात् ।

३ आदिशब्दनिर्देशेन स्वप्नसुषुप्ताख्ये अवस्थे विज्ञेये । स्मृतिमदमूर्छादयस्तयोरेवान्तर्भूताः । तत्र यस्यां बुद्धीन्द्रियैर्बहिर्विषयान् परिग्रहीतुं विकसितकरणेश्वरीको जनः परिस्पन्दते सा जागरावस्था । यत्र बाह्यतो व्युपरतकरणचक्रस्य मनसैव सकलकरणशक्तिमता उपकल्पितविषयोपभोगपरिग्रहणं सा स्वप्नावस्था । यत्र मनसोऽपि व्यापृत्युपरतौ सत्यां प्रोक्तोभयथाकारविषयजातासंवेदनं सा सुषुप्तावस्था । स्मृतिरनुभूतविषयासंप्रमोषः । मदः पानातिशयजन्यश्चित्तवृत्तिसंमोहः । मूर्छा विषादादिजनितमोहात्मा इति एतासु विजृम्भमाणास्ववस्थासु अनुसंधानैक्यबलवत्स्वानुभवप्रमाणेन उपलब्धृतायावस्थातुरभेदः सिद्धः । तदभिन्नेति बहुव्रीहिर्बोध्यः ।

---

पं० २ घ' पु० इत्युच्यते इति यदि-शब्दहीनः पाठः ।

जाग्रदादिनापि भेदे प्रथमाने न तस्य स्वरूपम् आव्रियते, यस्मात् उपलब्धृरूपत्वं त्रिष्वपि पदेषु साधारणम्, न तस्य स्वरूपान्यथाभावः, यथा विषस्याङ्कुरादिषु च पञ्चसु स्कन्धेषु ॥३॥

अहं सुखी च दुःखी च रक्तश्चेत्यादिसंविदः।
सुखाद्यवस्थानुस्यूते वर्तन्तेऽन्यत्र ताः स्फुटम् ॥४॥

स चानुस्यूत एव सर्वास्ववस्थासु, यस्मात् 'य एव अहं सुखी स एव अहं दुःखी' 'रक्तो वा

---

४ संविद इति बहुवचनस्य (ज्ञानसंतान एव क्षणिकः स्वतन्त्रः स एव स्मृत्युत्प्रेक्षादिपद्धत्या दूरतरं विसार्यमाणो बहुप्रकारं शाखोपशाखोद्भिन्नोऽहंप्रतीत्यापि बुद्ध्याद्यालम्बनो नान्यस्य स्मर्तृद्रष्टृताभिमतस्य संबन्धितामवलम्बते) इत्येवमभिप्रायः, तथात्वे स्मृतिप्रत्यभिज्ञाद्यनुसंधानं न स्यात् असति च तस्मिन् सर्वव्यवहारोच्छेदः प्रसज्येतेत्येतत् सर्वं प्रसक्तं परिहर्तुं विशिष्यते अन्यत्रेति, सुखित्वादिप्रत्ययसंतानेन प्रवर्तमानावस्थानामुपलब्धरि पूर्वापरव्यवस्थाव्यापकतया सर्वप्रमातृस्वानुभवसिद्धे निर्निरोधानुसंधात्र्येकाश्रयत्वस्वभावः शंकरः सुव्यक्तः।

---

पं० १ ख' घ' पु० भेदे प्रवर्तमाने इति पाठः।

पं० ४ वृक्षस्याङ्कुरादिषु इति क्वाचित्कः पाठोऽमौलिकः।

पश्चात् स्थित' इति अनुस्यूतत्वेन; अन्यत्र अवस्था-व्यतिरिक्ते । यदागमः

'..................स स्वभावः परः स्मृतः ।'

इति ॥ ४ ॥

**न दुःखं न सुखं यत्र न ग्राह्यो ग्राहको न च ।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥५॥**

तस्य चायं स्वभावो—यत् सुखदुःखग्राह्यग्राहक-मूढतादिभावैरस्पृष्टः स एव च परमार्थतोऽस्ति नित्यत्वात्; सुखादयः पुनः संकल्पोत्थाः क्षण-

---

५ सुखादिरूपताप्रतिषेधेन बाह्याभ्यन्तरतया द्विविधवेद्यता प्रति-षिध्यते । ग्राहकशब्देन देहादिमायीयप्रमातृभावप्रतिक्षेपः । वेद्यवेदना-संचेतनावस्थापि उत्तरकालं प्रत्यवमृश्यमानत्वात् वेद्यभूमिमाश्रितैव इति ज्ञानगोचरप्रमेयवस्तुत्वनिषेधात् अभावमात्रं प्रतिक्षेप्तुमाह तद-स्तीति । सदोदिताविलुप्तोपलब्ध्रेकस्वभावं तत् वेद्यवेदकयोरन्योन्यं विप्रकृष्टस्वभावत्वात्, वेद्यमसत्यस्वभावं क्षणभङ्गुरं, वेदितैव परमार्थ-सन् इति प्रतिपाद्यते ।

---

पं० १ क' पु० पृथक्स्थित इति, घ' पु० पश्चात्सित इति पाठः ।

पं० ५ घ' पु० न ग्राह्यमिति पाठः ।

पं० ८ क' पु० परमार्थोऽस्तीति पाठः ।

भङ्गुरा आत्मस्वरूपबाह्याः शब्दादिविषयतुल्याः ; न च, सुखादिस्वरूपो यदा नासौ तदा पाषाणप्रख्य एव ॥ ५ ॥

यतः करणवर्गोऽयं विमूढोऽमूढवत्स्वयम् ।
सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ॥ ६ ॥
लभते, तत्प्रयत्नेन परीक्ष्यं तत्त्वमादरात् ।
यतः स्वतन्त्रता तस्य सर्वत्रेयमकृत्रिमा ॥ ७ ॥

( युगलकम् )

---

६—७ उत्पत्तिः विविदिषितविषयमुखप्रेक्षित्वात्मसमुन्मिषदवस्था । स्थितिः उपरक्तार्थचमत्कृतिविश्रान्त्यवस्था । निरोधः कृतकृत्यतया विषयस्य स्वात्मसात्करणे स्वव्यापारोपरत्यात्मप्रत्यस्तमयावस्था इत्येता यत्संपर्कबलात् त्रयोदशसंख्यानां करणानां जडतयाभिमतानामुपलभ्याः । परमार्थतत्त्वमात्मभावेन विज्ञातं करणस्वातन्त्र्याधानवत् सर्वसाधारणार्थस्वातन्त्र्यलाभायापि अभ्यासातिशयदशापरिपाके कल्पते, तस्य स्वेच्छामात्राधीनसमस्तनिर्मातृत्वलक्षणं स्वातन्त्र्यं समावेशसंपत्तिमत्सु देहतद्दशाविशेषेषु उपादानसहकार्यादिकारणनिरपेक्षं सहजसिद्धं संसारिदशायामपि तन्महिम्नैव व्यवहारसिद्धेः, मायाख्यामोहमात्रवशात् तु स्वात्मप्रत्यवमर्शाभावे व्यतिरिक्तकारणसापेक्षतया वस्तुसिद्धेः पारतन्त्र्यव्यवहार इत्यत्र स्वातन्त्र्यप्रतिपादनात् उपादेयतातिशय्यते ।

यतः करणवर्गस्य अन्तश्चक्रसहितस्य विमूढस्याप्यमूढवत् उत्पत्तिस्थितिनिरोधाः, सोऽन्येषां चैतन्यापादने समर्थः कथं निःस्वभावः ॥ तस्मात् तत् तत्त्वं यत्नेन परीक्षितव्यं योगिना, यथास्य करणादिषु चैतन्यदाने स्वातन्त्र्यम्, तथा परपुरादिष्वपि संभाव्यते ; स्वातन्त्र्यस्य स्वस्वभावभूतस्य सर्वत्राकृत्रिमस्याभ्यासात् यतो व्यक्तिः ॥६-७॥

न हीच्छानोदनस्यायं प्रेरकत्वेन वर्तते ।
अपि त्वात्मबलस्पर्शात्पुरुषस्तत्समो भवेत् ॥८॥

---

८ अयमत्राशयः—यथा परमेश्वरः पूर्णज्ञातृत्वकर्तृत्वशक्तिभ्यां जगन्ति प्रवृत्त्यादिव्यापारं लम्भयन् विश्वत्र ज्ञानक्रियावत्तामधिरोहति एवमनुत्तरतद्बलसंपर्कादेव योगिनो ज्ञातृत्वादिसामर्थ्यमुपजायते मायावशात् संकोचोन्मुखीभावेन ज्ञानक्रिये शक्ती अपि अन्तर्बहिष्करणतया संकुचितीभूय प्रसूते प्रतिनिजनियतविषयेषु व्यापरितुं शक्नुतः इत्यतोऽणुरपि स्वस्वभावमध्यास्य करणचक्रप्रेरणादौ स्वतन्त्रो न तु अस्य धर्माधर्मसंबद्धेच्छाख्यगुणप्रेरणाया करणचोदितदात्रादिवदुपचरितकर्तृत्वम् ।

---

पं० १ ख॰ पु० यत इत्यनन्तरं 'चैतन्यस्वभावात्' इत्यप्यधिकः पाठोऽस्ति ।
पं० ७ क॰ ग॰ घ॰ पु० यदा व्यक्तिः इति पाठः ।

न च इच्छाप्रेषणेन करणानि प्रेषयति, अपि तु स्वस्वरूपे स्थित्वा केवलं यादृशी तस्येच्छा प्रवर्तते तथाविधमेव स बाह्यान्तरं कार्यमुत्पादयति, तेन न करणविषयमेव सामर्थ्यम्, किं तु तस्य सर्वत्र ॥ ८ ॥

निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिणः।
यदा क्षोभः प्रलीयेत तदा स्यात्परमं पदम् ॥९॥

स चास्य आत्मबलस्पर्शः सहजया अशुद्ध्या व्याप्तस्य कार्यमिच्छतोऽपि न भवति, किंतु यदा क्षोभः 'अहमिति' प्रत्ययभावरूपोऽस्य प्रलीयेत,

---

९ सत्यपि परमेश्वरसाम्यासादनात् ईश्वरपुरुषयोरभेदे केवलं पुरुषस्य रागादिनिबन्धनमलाक्रान्ततया अनित्यपरिपूर्णतृप्तिता, यया साध्यसाधनोपार्जनेषु अशक्तत्वेन शक्तिदारिद्र्यम्, अत एव भेदनिबन्धनमीश्वरसाम्यं मायीयोपद्रवप्रलये पुनः संविदैकात्म्यमनुपचरितप्रथं सैव परमशुद्धिः।

---

पं० १ ग॰ पु० इच्छाप्रेरणेन करणानि प्रेरयतीत्यपि पाठान्तरं वर्तते।

पं० ८ ख॰ पु० स आत्मबलेति पाठः।

पं० १० घ॰ पु० क्षोभो देहाद्यहमिति शोधितपाठः, प्रलीयते इति च पाठोऽस्ति।

तदास्य भवति परमे पदे प्रतिष्ठानम् ॥६॥

तदास्याकृत्रिमो धर्मो ज्ञत्वकर्तृत्वलक्षणः ।
यतस्तदीप्सितं सर्वं जानाति च करोति च ॥१०॥

यतः, तस्मिन् प्रलीनक्षोभात्मके काले अकृत्रिमः सहजो ज्ञत्वकर्तृत्वभावरूपो धर्मो यस्मात्, तस्मिन् एव प्राप्तयोगात्मके काले यत् यत् ज्ञातुम् इच्छति तत् तत् जानाति च करोति च; नान्यदा संसार्यवस्थायाम् ॥१०॥

---

१० एकमेव अव्यभिचारि आत्मन उपलब्धृत्वं नाम अयुतसिद्धो गुणः स्वात्मप्रत्यवमर्शरूपः, स एव ज्ञेयकार्यविषयतया ज्ञानक्रियाद्वैरूप्येण आम्नायते अस्यैव गुणस्य स्वमहिमविजृम्भणं निरुपरोधं स्वसंवेदनीयं केवलं सर्वज्ञत्वसर्वकर्तृत्वशक्तिविकासिन्युपलब्धृलक्षणे आस्पदे विकल्पकलङ्कोपप्लवासंपृक्ते। यस्मात् तत्र ज्ञेयकार्यप्रत्यवमृश्येषु निर्यन्त्रणं स्वातन्त्र्यं, यत्तु संसार्यवस्थायामख्यातिमुग्धतया वेद्येषु ज्ञत्वकर्तृत्वाहंमतिः सा कृत्रिमा परिमिता च नियमितस्वातन्त्र्यगतिमत्त्वात् अतो ज्ञत्वकर्तृत्वलक्षणो धर्मः स्वभाव एव न पुनः क्षुब्धावस्था। तस्मात् स्वब-

---

पं० २ क॰ पु० तदा स्यात्कृत्रिम इति पाठः ।

पं० ५ ख॰ घ॰ पु० धर्म इति शब्दो नास्ति ।

तमधिष्ठातृभावेन स्वभावमवलोकयन् ।
स्मयमान इवास्ते यस्तस्येयं कुसृतिः कुतः[११] ॥११॥

तदेवम्, यतः सर्वानुस्यूतः सर्वसामर्थ्ययुक्तश्च आत्मस्वभावः, तस्मात् तम् अधिष्ठातृभावेन सर्वव्यापकत्वेन स्वभावं पश्यन्, विस्मयाविष्ट इव यस्तिष्ठति, तस्य कुत्सिता सृतिः सरणं न भवति ॥११॥

नाभावो भाव्यतामेति न च तत्रास्त्यमूढता ।
यतोऽभियोगसंस्पर्शात्तदासीदिति निश्चयः[१२] ॥१२॥

---

लसंस्पर्शात् करणचक्रप्रवर्तनादिकार्यवृत्त्या संयुज्यमानस्य तत्साम्योपलब्धिः ।

११ उपपत्तिव्यवस्थापितस्य शंकरस्वभावस्य अविरतकालप्रबन्धतया सदोदितान्तर्बहीरूपतया स्फुरदधिष्ठातृत्वं प्रत्यभिजानतो विस्मृतशिवस्वरूपविज्ञानात् 'मायीयप्रमातृभावोऽसन्नेव इत्थं शुक्तिकारजतवद्भासमानः' इत्येवं विमृशतुरनुक्षणं नवनवानुत्तरातिशयचमत्काररसास्वादनेन विस्मयावस्थितिरलौकिकी अनुभवपदवीमधिशेते यत्प्राप्तौ परिमिताहंमतिनिबन्धनः संसरणायासक्षोभो विरम्यते इति ।

१२ वेद्यवेदनोल्लेखोच्छेदरूपे समाधौ कैश्चिदभाव इति मन्यते, न चैतत् तस्य भाव्यमानतया व्याघातात् तत्रलब्धप्रतिष्ठेन योगिना अभाव-

न तु अभावो भावनीयो, यथा अन्यैर्योगिभिः उपदिश्यते,

'अभावं भावयेत्तावद्यावत्तन्मयतां व्रजेत् ।'

इति । न चैतत् युक्तम्, यस्मात् नाभावे भावना युज्यते मूढावस्थैव सा, यस्मात् उत्तरकालम् अभियोगसंस्पर्शात् अभिलापसंयोगात् सा शून्यावस्था अतीता मम इति स्मर्यते, न च आत्मस्वभाव एषः, यस्मात् न त्वेवं चिद्रूपत्वं मूढावस्थावत् स्मर्यते, तस्य सर्वकालमनुभवितृत्वेनानुभवो नित्योदितत्वात् ॥१२॥

---

समाधेर्व्युत्थाय उत्तरकालं 'सा दशा मयान्वभूयत' इत्यनुसंधानेन तद्दशान्तरं स्मर्यमाणतां नीयते तत् स्मरणमेव तदानीमनुभवितृसत्तां विविक्तामुपलम्भयेत् इति स्मर्यमाणं वस्तु अभावरूपं स्वात्मा भवितुं नार्हति सुखादिवत् तस्य वेद्यत्वात् इति । तस्मात् समस्तवेद्यधर्मोज्झितः परस्वभाव उपादेयः ।

---

पं० ६ क० पु० अभिलाषेति, ग. पु० संयोगात्मा शून्येति च पाठः ।

**अतस्तत्कृत्रिमं ज्ञेयं सौषुप्तपदवत्सदा ।**
**न त्वेवं स्मर्यमाणत्वं तत्तत्त्वं प्रतिपद्यते ॥१३॥**

अभावभावनालब्धभूमिकस्यापि कृत्रिमा अनित्या सा अवस्था, यथा सौषुप्ते पदे; यस्मात् चिद्रूपत्वं तु आत्मनः स्वरूपं नित्यसंनिहितम्, तदेव गुरूपदेशेन नित्यमेवानुशीलनीयम् ॥१३॥

**अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥१४॥**

---

१३ अत्रैतदुच्यते—यथा मोहघना सुषुप्तावस्था तदात्वे वेद्यवेदकविभागाग्रहणमयी अभावरूपेव उपलभ्यमाना प्रबोधदशायामुदितावमर्शगोचरतामापद्य स्मर्यमाणत्वेनानित्या। एवमभावसमाध्यवस्थापि अतीतत्वेन प्रबोधकाले विचिन्त्यत्वात् अनित्या—इत्येवं-प्रायाः समाधिविशेषाः सुषुप्तिदशान्तर्भाव्याः, न पुनरुपेयतमस्वरूपे एवंरूपो भूतकालाक्रान्तः स्मरणप्रत्यवमर्शः स्मर्त्रन्तरस्मार्यः, परतत्त्वस्य सदोदितविज्ञातृस्वभावतया शाश्वताविचलविद्यमानपरमसत्त्वात्।

१४ अवस्थाशब्देनेदमत्र उद्देश्यम्। एक एव स्वतन्त्रः परमेश्वरो विश्वत्र परमार्थतः समस्ति। स एव अनुत्तरनिर्यन्त्रणस्वात्मैश्वर्यशक्तिविजृम्भणया निरुपादानसंभारं द्विविधं स्वात्मानमवभास्य विक्रीडति। द्वैविध्यं च कार्यकर्तृत्वाख्यं, येन हेयतयोपादेयतया च द्वैलक्षण्यं वस्तु

अवस्थायुगलम्, अवस्थाद्वयमेव कार्यकर्तृत्वसंज्ञं भोग्यभोक्तृभेदभिन्नं, तत्र यो भोग्यरूपो भेदः स उत्पद्यते नश्यति च; भोक्तृभेदस्तु चिद्रूपः पुनर्न जायते, न कदाचित् विनश्यति तेन नित्यः ॥ १४ ॥

कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।
तस्मिंल्लुप्ते विलुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥१५॥

कार्यसंपादनसामर्थ्यं बाह्यकरणव्यापाररूपं केवलं विलुप्यते, स्थगितेन्द्रियस्य तस्मिन् विलुप्ते सामर्थ्ये

---

संगृह्यते । तत्र कार्यावस्था परप्रकाशोपजीविनी अन्तरेण प्रकाशयितारमवस्थातुमप्रभुः तदभिन्नं निजरूपमावेदयति शाक्तोल्लासमयत्वात्, केवलं कार्यतोपाधिरचिरायैव अनुविलयी, कर्तृतावस्थितिः पुनः सदोदिताविलुप्तदृशिमात्रधर्मकत्वात् अविनाशिनी इति । तदेवं स्वमायोद्भासितविश्वोल्लासज्ञप्तिपूर्वं स्वसंवेद्यमुत्तीर्णतममात्मानं निदिध्यासतां सर्वावस्थासु बन्धहेतुनिवृत्तिः ।

१५ वेद्योन्मुखतामवलम्ब्यैव सहजोद्यमनशक्तेर्विश्ववैचित्र्योल्लेखनकारितया बहिर्विलसितुं यः प्रसरणादरः स केवलमिन्द्रियव्यापारविरतिदशायामनभिव्यक्ततया आत्मन्येव अवलीनः, तदव्यक्तिदशायाम-

---

पं० १ क. ग. पु० अवस्थायुगलमिति वाक्यं नास्ति ।

पं० ३ ख. पु० भोक्तृरूप इति पाठोऽस्ति ।

स्वभावो मे विलुप्त इति अबुधो जानाति, न तु भावस्य विनाशोऽस्ति ॥१५॥

**न तु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम्।**
**तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात्[१६] १६**

न तु यः अन्तर्मुखः अन्तश्चक्रारूढस्वभावः सर्वज्ञत्वादिगुणाश्रयः तस्य विनाशः कदाचित्,

---

बुद्धस्य अयं परामर्शो यत् नाहमस्मीति स्वाभावं स मन्यते; नैतत् जानाति यत् अभावपरामर्श एव प्रत्युत तत्साक्षितया स्वात्मानं स्थिरीभावयति इति अतोऽभावसमाध्याद्यवस्थासु तात्कालिकानुपलभ्यतया आत्मनः क्षयित्वं नैवाक्षेप्तव्यम् ।

१६ एकैव पारमेश्वरी शक्तिः संकोचग्रहणोपक्रमे स्वात्मानं द्विधा अवभास्य ज्ञानक्रियायुगलोद्भावनोत्तरमत्यन्तमर्वाचीनपदे अन्तर्बहिष्करणभावमुपाश्रयते संकोचहानदशापरिशीलनादौ विविक्तीभूतं स्वं रूपं प्रत्याहृत्य सर्वतो विमलनभःप्रख्ये वितताभोगे स्वस्मिन् स्वानुभूतिपारिपूर्ण्यचमत्कृतिमास्वदते । तत्र विभिन्नविभक्तवेद्याभावात् अन्तर्मुखतत्त्वस्य विलोपः संभावयितुमनर्हो यो बाह्यवेद्यग्रहणाग्रहवद्भिः व्यामूढैः प्रतिपद्यते, अथवा चतुर्थपादस्य हेतुभावेन प्रयोगः, यस्मादुपलब्धृस्वरूपस्य विलुप्तौ विश्वमनेलमूकप्रायं स्यात् विश्वव्यवहारोऽपि व्युच्छिद्येत इति ।

---

पं० १ मे इति पदं घ. पुस्तकादुपन्यस्तम् ।

तस्मात् द्वितीयस्यान्यस्याभावात् तत्स्वरूपमेव व्योमवत् चिद्रूपतया सर्वत्र अनुभवति इति ॥१६॥

**तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी ।**
**नित्यं स्यात्सुप्रबुद्धस्य तदाद्यन्तेऽपरस्य तु[१७] ॥१७॥**

तस्य चिद्रूपस्य सर्वगतस्य स्वस्वभावस्य उपलब्धिः त्रिषु जाग्रदादिषु पदेषु नित्यं सुप्रबुद्धस्य भवति; तदाद्यन्ते अपरस्य प्रबुद्धस्य स्वप्नसुषुप्तादौ; जाग्रत्तुर्यौ त्वागममात्रगम्यौ ॥१७॥

---

१७ सर्वोत्तीर्णचिन्मात्रविषयो विश्वमयशाक्तचक्रविषयश्च—इति उपक्रान्तनिर्वाह्यात्मकतया द्विविधोपदेशस्य प्रायशोऽप्रबुद्ध विषयेऽनुपयोगितैव सुप्रबुद्धस्यैव पदत्रये स्वात्मोपलब्धेरयत्नसिद्धत्वात्, प्रबुद्धस्य हि पदद्वयवर्ति साक्षिरूपं प्रबोधावस्थायां परामृशतो विश्वोत्तीर्णनिरुपरागचेतयितृमात्रस्वरूपोपलब्धिः सौषुप्तप्रत्यवमृश्या, स्वप्नावगम्या च विश्वमयनिर्माणविस्फुरणशालिनः कारणान्तरनिरपेक्षस्य सर्वकर्तृत्वधाम्नः स्वात्मन उपलब्धिरनायासं सिद्ध्यति । अप्रबुद्धः पुनर्युक्तिसहस्रैरपि उपदेश्यमानं परतत्त्वं नैव पारयति हृदयंगमीकर्तुम्, अतोऽवशिष्टपदद्वये व्यवहित्यपरिचितिभ्यां दुर्बोधस्य परतत्त्वस्योपदेशमपेक्षते इत्युपदेशविषयव्यवस्थितिः केवलं प्रबुद्धस्यैव ।

---

पं० ८ ख. पु० जाग्रत्तुर्ये आगममात्रगम्ये इति

ग. पु० स्वप्नसुषुप्त्यादौ जाग्रत्तुर्ययोस्त्वागममात्रगम्या इति पाठः ।

ज्ञानज्ञेयस्वरूपिण्या शक्त्या परमया युतः।
पदद्वये विभुर्भाति तदन्यत्र तु चिन्मयः ॥१८॥

ज्ञानज्ञेयभेदेन द्विरूपे जाग्रत्स्वप्नात्मके पदद्वये संवेदनम्, सुषुप्ततुर्यात्मके पदद्वये पुनश्चिद्रूपत्वेन केवलम् अनुभवः, न तु द्वितीयमन्यत्वेन उपलभ्यते॥ १८ ॥

गुणादिस्पन्दनिःष्यन्दाः सामान्यस्पन्दसंश्रयात्।
लब्धात्मलाभाः सततं स्युर्ज्ञस्यापरिपन्थिनः १९

---

१८ परमेश्वर एव स्वमायाशक्तिमहिम्ना विचित्रक्षेत्रज्ञभावेन प्रथमानः स्वाव्यतिरेकिणी पराशक्तिं पदद्वये जाग्रत्स्वप्नाख्ये आभ्यन्तरकरणसुखादिना बहिष्करणनीलादिना च अवभास्य तत्तद्दशाव्यवहारानुद्भावयति परन्तु एतदेव शक्तेः परत्वं—यत् शिवप्रकाशमतिरोधाय अनन्तवैभवेन स्फुरणं, सुषुप्ततुर्ययोस्तु विभक्ताभिन्नसंवेदनीयाभावात् स्वात्मनि समरसीभूतशक्तिरीश्वर एव प्रकाशते। भावानां स्थैर्यास्थैर्यप्रतिपत्तिविकल्पेन प्रथमपदयोर्भेदः। अपरत्र चिन्मात्ररूपस्य उपलब्धृचमत्कृतिसद्भावासद्भावाभ्यां भेदः इति चतुर्षु पदेषु सर्वोत्तीर्णतया सार्वरूप्येण च प्रकाशविजृम्भणम्।

१९ पारमेश्वर्यानुग्रहशक्त्या प्रत्युत्पन्नहेयोपादेयविवेकस्य नैर्विकल्पिकीं प्रतिष्ठामाश्रित्य सत्तर्कागमयुक्त्यभ्यासोत्साहेन उच्चपदारुरुक्षां

गुणस्पन्दस्य सत्त्वरजस्तमोरूपस्य ये निःष्यन्दाः प्रवाहाः, ते सामान्यस्पन्दमाश्रित्य प्रसृता अपि सततं ज्ञस्य विदितवेद्यस्य योगिनः स्युर्भवेयुः, भवन्त्यपरिपन्थिनः अनाच्छादकाः स्वभावस्य ॥१९॥

अप्रबुद्धधियस्त्वेते स्वस्थितिस्थगनोद्यताः।
पातयन्ति दुरुत्तारे[२०] घोरे संसारवर्त्मनि ॥२० ॥

स्वल्पप्रबोधांस्तु स्वस्थितेः चिद्रूपायाः स्थगनं कृत्वा, ते गुणाः पातयन्ति दुरुत्तारे अस्मिन् विषमे संसारवर्त्मनि, यतस्तदात्मकमेव नित्यमात्मानं पश्यन्ति, न तु शुद्धबुद्धस्वरूपतया ॥२०॥

---

परिशीलयतो ज्ञस्य सुखिदुःखिमूढतादिप्रत्ययप्रवाहाः खेचर्याद्यधिष्ठिताः क्रोडीकृतविश्वस्पन्दं परशक्तिस्फुरितं समाश्रित्यैव लब्धस्वात्मप्रतिष्ठाः स्वात्मवीर्याविर्भावनात् विगलितावरणसामर्थ्याः परतत्त्वोपलम्भं विहन्तुं न शक्नुयुरिति तात्पर्यम्।

२० अप्रबुद्धो विद्यमानमपि स्वैश्वर्यं सार्वज्ञादिगुणास्पदं स्पन्दतत्त्वमविदन् सर्वथा परतन्त्रं देहादिकमेव आत्मत्वेन स्वीकरोति। अत एव ज्ञानगुणप्रसराः परमात्मस्थितिं तिरोधाप्य यावत्प्रबोधप्राप्तिमप्रबुद्धं जन्मा-

---

पं० ७ क' ख' पु० अल्पप्रबोधानामिति पाठः।

**अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये ।**
**जाग्रदेव निजं भावं न चिरेणाधिगच्छति**[२१] **॥२१॥**

अतः सततं सर्वकालं यः करोत्युद्योगं स्पन्दतत्त्वस्य स्वरूपाभिव्यक्त्यर्थं, स जाग्रदवस्थायामेव निजमात्मीयं तुर्यभोगाख्यं स्वभावम् अचिरेणैव कालेन प्राप्नोति ॥२१॥

**अतिक्रुद्धः प्रहृष्टो वा किं करोमीति वा मृशन् ।**
**धावन्वा यत्पदं गच्छेत्तत्र स्पन्दः प्रतिष्ठितः**[२२] **॥२२॥**

तस्य च स्पन्दतत्त्वस्य अतिक्रुद्धे प्रहृष्टे धावमाने

---

दिस्रोतस्यावर्तयन्त्येव — इत्यतः प्रबुद्धस्यैवोपदेश्यता निरूढद्राढिमा, अप्रबुद्धविषये विहितनिषेधेति भावार्थः ।

२१ प्रकृतश्लोकनिर्दिष्टहेतोः प्रबुद्धस्यात्मीयपरमार्थसत्तायाः अधिगमोऽनतिविलम्बेनैवेत्यर्थः ।

२२ तीव्रतरोपद्रवद्विषद्दर्शनादौ मृतप्रत्युज्जीवितप्रियासंगमादौ बलवदभियुक्ततायां च तत्प्रतीकारकिंकर्तव्यताविचारणेऽपि निरालम्बनचित्तवृत्तितया तत्तद्धर्षादिव्यञ्जकवस्तूत्पत्तेः प्रागेव समुद्भूतमात्रस्थायिभावस्य प्रतिष्ठितस्पन्दस्योपलब्धिः । एवं कर्मेन्द्रियव्यापृतिविशेषेऽपि ऐश्वररूपसमावेशः ।

---

पं० २ घ' पु० भावमचिरेणेति शोधितः पाठः ।

च किं करोमि,-इत्येवं चिन्ताविष्टे यदा शक्तिप्रत्यस्तमयः, तदा स्पन्दतत्त्वस्य स्फुट एवोदयो गुरूपदेशात् अधिगन्तव्यः ॥२२॥

**यामवस्थां समालम्ब्य यदयं मम वक्ष्यति।**
**तदवश्यं करिष्येऽहमिति संकल्प्य तिष्ठति[२३] ॥२३॥**

यां स्पन्दस्वरूपरूपामवस्थामवलम्ब्य यत्किंचित् अयं मम वक्ष्यति, तत् अवश्यं करिष्यामि-इत्यध्यवसायेन स्पन्दतत्त्वमधिष्ठाय यो वर्तते ॥२३॥

**तामाश्रित्योर्ध्वमार्गेण सोमसूर्यावुभावपि।**
**सौषुम्नेऽध्वन्यस्तमितो हित्वा ब्रह्माण्डगोचरम्[२४] ॥२४**

---

२३ अत्र समालम्बनक्रियातः पूर्वभाविनि क्रियान्तरे परितिष्ठितवाक्यस्यायमाशयः—यथा प्रभोराज्ञानिर्वहणेऽवहितमनस्कतया सर्वा वृत्तयो विलीनाः संपद्यन्ते, निस्तरङ्गदशा चोदेति। एवं सर्वात्मना समस्तान्यकरणीयतां परिहृत्य स्पन्ददशावधाननिविडावमर्शस्याभ्यासात् परतत्त्वोपलब्धिरिति।

२४ सोमसूर्यावित्यस्य तात्पर्यमिदम्। स्पन्ददशामाश्रितस्य मनः

---

पं० ७ अध्यवसायेनेत्यतोऽनन्तरं ख᳚ घ᳚ पु० 'वर्तते तथाविधाध्यवसायेन' इतीयान्पाठोऽधिकोऽस्ति।

पं० १० ख᳚ ग᳚ पु० अस्तमितौ इति पाठः।

तस्य, तामवस्थामाश्रित्य पुरुषस्य, सोमसूर्यौ द्वावपि सौषुम्ने अध्वनि मध्यनाड्यभिधाने, अस्तमयं कुरुतः; ब्रह्माण्डगोचरं शरीरमार्गं परित्यज्य योगिनः ॥२४॥

तदा तस्मिन्महाव्योम्नि प्रलीनशशिभास्करे।
सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ॥२५॥

तस्मिन् महाव्योम्नि प्रत्यस्तमितशशिभास्करे यस्य स्वस्वभावाभिव्यक्तिः न सम्यक् वृत्ता, स

---

प्राणौ मध्यनाड्यां लीयेते। संविदेव यथोत्तरं संकोचग्रहणेन संकुचिता ज्ञानक्रियाशक्तिभावप्राप्तिपूर्वं मनःप्राणप्रसररूपतामापद्यते। प्रत्याहरणकाष्ठाधिरोहणे उभावेव ज्ञानक्रियाशक्तिमयावुभयविधमेव हेयोपादेयविषयवेदनं नाडीसंचारणात्मकार्यमपि परिहाय सामान्यमौलिकरूपं प्रत्यापद्येते इति।

२५ परमाकाशे समस्तज्ञेयकार्याणांविलीनप्रायत्वात् मूढानां वर्णितपूर्वा तुर्यदशा सौषुप्तपदवत् शून्यरूपा, ईशितृशक्तिपातेन समुदितज्ञानदृष्टीनां पुनस्तस्यां दशायामनुभूयमानतुर्यचमत्कृतिर्निरावरणं निर्भासते इति तत्र दशायां यथाकथंचित् सर्वेषामुपजायमानायां सत्यामपि उपदेशनिरपेक्षणं तमःपदप्रवेशानर्थः स्यात् तत्परिहारायोपदेशस्य सापेक्षतेति।

स्वप्नादिना मुह्यमानोऽप्रबुद्धो निरुद्धः स्यात्; प्रबुद्धः पुनरनावृत एव भवति ॥२५॥

इति श्रीकल्लटाचार्यविरचितायां स्पन्दकारिकावृत्तौ स्वरूपस्पन्दः प्रथमो निःष्यन्दः ॥ १ ॥

---

अथ सहजविद्योदयाख्यो द्वितीयो निःष्यन्दः ।

**तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः ।**
**प्रवर्तन्तेऽधिकाराय करणानीव देहिनाम् ॥२६॥**

तत् बलं निरावरणचिद्रूपमधिष्ठाय, मन्त्राः सर्वज्ञत्वादिना बलेन श्लाघायुक्ताः प्रवर्तन्ते अनुग्रहादौ स्वाधिकारे । करणानि यथा देहिनाम्, नान्येन आकारादिविशेषेण ॥२६॥

**तत्रैव संप्रलीयन्ते शान्तरूपा निरञ्जनाः ।**
**सहाराधकचित्तेन तेन ते शिवधर्मिणः ॥२७॥**

---

२६ शाक्तबलाक्रमणादेव नियन्त्रितेतिकर्तव्यतासचिवा मन्त्राः प्राणभृत्करणवत् यथास्वं प्रतिनियतप्रयोक्तव्यकार्यसिद्धिषु अप्रतिहतशक्तयः, तद्विना तृणमात्रमपि कुब्जयितुमसमर्थाः, नियतिशक्तिबलात् भिन्नभिन्ननियोगेभ्यः प्रवर्तन्ते न सर्वे सर्वेभ्य इति भावः ।

२७ इदमत्र तात्पर्यम्—शिवशक्तिरेव मन्त्रसंनिवेशादिरूपधारिणी उदयास्तमयदशयोः शिवाभेदवत्त्वात्, यत्र यत्र शिवाभेदवत्त्वं तत्र तत्र

तत्रैव स्वस्वभावव्योम्नि निवृत्ताधिकाराः प्रलीयन्ते, शान्तरूपाः, मायाकालुष्यरहिताः, सह साधकचित्तेन; अनेन कारणेन शिवसंयोजनास्वभावेन, इति शिवात्मका उच्यन्ते ॥२७॥

**यस्मात्सर्वमयो जीवः सर्वभावसमुद्भवात् ।**
**तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः ॥२८॥**

सर्वात्मक एवायमात्मा सर्वानुभावोत्पत्तिद्वारेण

---

शाक्तरूपत्वं, यथा संकल्पस्वप्नपुरादिषु,–इति व्याप्त्यादिना सुदृढप्रतिपत्तेर्मन्त्रवीर्यानभिज्ञस्य भेदविभ्रमात् नियतसाध्यसाधनाय पर्यवसायिनः प्रबुद्धस्य पुनर्मन्त्राः सर्वार्थसाधनाधिकारिणो भवन्ति; न केवलं मन्त्रा एव, यावल्लौकिकभाषामात्रमपि अमोघमन्त्रभावमुपगच्छति–इत्यनेन क्रिया ज्ञानं कार्यं ज्ञेयं वा वस्तु शिवधर्मकमेवेत्युपलक्ष्यते ।

२८ संचेत्यमानं प्रत्येकं वस्तु वस्तुतो विज्ञानिनो जीवस्य स्वाङ्गकल्पमेव–इति न केवलं भूतात्मकमेवास्य वपुः, यावद्भावात्मकमपि। घटसुखादेर्भावस्य हि संवेदनं समुत्पत्तिः, संवेद्यमानतैव तत्स्वरूपप्रतिष्ठा असंवेद्यमानस्य स्वप्रतिष्ठानासादनात् इत्यतो जीवादपि सर्ववस्तुसमुत्पादः । तस्मात्सोऽपि विश्वमयः । अवच्छिन्नाहंकृतिपदं शिरःपाण्यादिमच्छरीरं भूतात्मकं, भावात्मकं तु शब्दादिविषयसंवेद्यम् ।

---

पं० ४ घ. पु० इति—शब्दानन्तरं ते इति पदमप्यस्ति ।

पं० ७ अयमितिपदं घ. पुस्तकादुपन्यस्तम् ।

अनुभूयमानस्यैव संवेदनात् बाह्यार्थमनुभूयमानमेव शरीरत्वेन गृह्णाति, न तु शिरःपाण्यादिलक्षितम् एकमेवास्य शरीरम् ॥२८॥

तेन शब्दार्थचिन्तासु न सावस्था न यः शिवः ।
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः[१] ॥२६॥

तेन तथाविधेन सर्वात्मकेन स्वभावेन, शब्दार्थयोः चिन्तासु न सा अवस्था या शिवस्वभावं न व्यञ्जयति, अतो भोक्तैव हि भोग्यभावेन सर्वत्रावस्थितो, न त्वन्यत् भोग्यमस्ति ॥२६॥

---

२९ प्रोक्तविश्वमयताप्रतिपत्त्या वाच्यवाचकात्मसु षडध्वजातेषु या काचित् संवित्तिप्रवाहपद्धतिः सा परप्रकाशात्मशिवमय्येव, तस्मात् ग्राहकात्मा परमेश्वर एवेच्छादिचक्रप्रेषणद्वारा ईशितव्यात्मज्ञेयकार्यवस्तुचमत्करणोद्युक्तस्तत्तादात्म्यसंपादनात् सदोदितसार्वत्रिकस्थितिरिति स्वस्वभावस्यैव जगद्विकासमयशक्तिविभवनशीलता निर्व्यूढा ।

---

पं० २ ख. पु० पाण्यादिरक्षितमिति, ग. पु० पाण्यादिलक्षणमिति पाठः ।
पं० ७ ग. पु० शिवं न व्यञ्जयति इति पाठः ।

इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन्सततं युक्तो जीवन्मुक्तो न संशयः ॥३०॥

एवंस्वभावं यस्य चित्तं, यथा—मन्मयमेव जगत् सर्वम् इति, स सर्वं क्रीडात्वेन पश्यन् नित्ययुक्तत्वात् जीवन्नेव ईश्वरवत् मुक्तो, न त्वस्य शरीरादि बन्धकत्वेन वर्तते ॥३०॥

अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्तिरिच्छतः साधकस्य या ॥३१॥

तत्संवेदनद्वारेण यः तदात्मग्रहो मन्त्रन्यासात्मकः स एवोदयः तस्य ध्येयस्य मन्त्रात्मनः

---

३० समनन्तरपद्योद्दिष्टनीत्या अव्युच्छिन्नपरामर्शावधानपरिशीलनवतो योगिनः सर्वेश्वरस्वतन्त्रचिद्वैर्वीयपूर्णाहंभावप्रतिपत्त्या अशेषमिदं विश्वं स्वरचितक्रीडनकलीलामात्रेण विभाव्य स्वलीलाजनितहर्षशोकाद्युपरागेऽपि शङ्कातङ्ककलङ्कयन्त्रणाभिर्मनागपि नोपलिप्तिरिति याथात्म्यवेदितृत्वाज्जीवत एव मुक्तिरित्यर्थः ।

३१ इदमिह प्रतिपादनीयम्, साधकचेतसो मन्त्रोच्चिचारयिषावस्थायां यदनायासेन ध्येयवस्तुना सहैकात्म्यं संपाद्यमानं स एव मन्त्राभिधेयस्य स्मर्तव्यदेवस्य तत्तदर्थक्रियाकार्यमोघशक्तिना उपास्या-

साधकचेतसि, तादात्म्यं तत्स्वभावत्वप्राप्तिः मन्त्र-देवतया सह साधकस्य मन्त्रोच्चारणेच्छया संपादिता ॥१॥

**इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः ।**
**इयं निर्वाणदीक्षा च शिवसद्भावदायिनी[३२] ॥३२॥**

इयमेव सा मिथ्याज्ञानशून्यस्य साधकस्य निरावरणस्वस्वरूपसंवित्तिः अमृतत्वप्राप्तिः, न तु रसास्वादरूपस्य धातुसारस्य स्थूलस्यास्वादनम् अमृतप्राप्तिरुक्ता, यैव मन्त्रोच्चारणमात्रेणैव मन्त्र-स्वरूपावस्थितिप्राप्तिः सैवात्मनो ग्रहणमित्युक्ता । यस्मात्

---

कारेण प्रत्यक्षावलोकनात्मोदयः, न तु विभाव्यमाना व्यतिरिक्ताकृतिरिति प्रागुक्तोपपत्त्या सुगृहीतयाभेदोपलब्धिरुपेयते इति ।

३२ प्राग्वर्णितायाः संविद एव अनित्यजडवस्त्वात्मनोऽमृतात् बाह्य-

---

पं० १ क. पु० मन्त्रस्य देवतया इति पाठः ।

पं० २ ख. ग. पु० मन्त्रोच्चारेणेच्छया संपादिका इति पाठः ।

पं० ६ ख. ग. पु० मात्रेणैव स्वस्वरूपावस्थितीति पाठः ।

'आत्मनो ग्रहणं कुर्याद्दीक्षाकाले गुरुर्धिया'

इति । न पुनर्लोष्टादिवत् हस्तेन तस्यामूर्तस्य ग्रहणं भवति, अत एव चेयमेव सा निर्वाणदीक्षा शिवसद्भावदायिनी, परमशिवस्वरूपाभिव्यञ्जिका ॥३२॥

इति श्रीकल्लटाचार्यविरचितायां स्पन्दकारिकावृत्तौ सहजविद्योदयो नाम द्वितीयो निःष्यन्दः ॥ २ ॥

---

साधनाद्यधीनदीक्षातोऽपि अनुत्तमवैलक्ष्येण अनुत्तरामृतरसमयता, उत्तम विधिसंस्करणकारणत्वं चेति ।

अथ विभूतिस्पन्दाख्यस्तृतीयो निःष्यन्दः ।

**यथेच्छाभ्यर्थितो धाता जाग्रतोऽर्थान्हृदिस्थितान् ।**
**सोमसूर्योदयं कृत्वा संपादयति देहिनः[33] ॥३३॥**

यथास्यानभिव्यक्तस्वस्वरूपस्य योगिनो जाग्रदवस्थायां यथा यथा इच्छा भवति, तथैव तस्यानेकार्थसंनिधानेऽभिमतस्यैव कस्यचिदर्थस्य दर्शनं भवति नटमल्लप्रेक्षादिषु सोमसूर्योदयं कृत्वा चक्षुरादिष्ववधानेन ॥३३॥

**तथा स्वप्नेऽप्यभीष्टार्थान्प्रणयस्यानतिक्रमात् ।**
**नित्यं स्फुटतरं मध्ये स्थितोऽवश्यं प्रकाशयेत्[34] ॥३४**

तथा स्वप्नेऽपि अभीष्टार्थानेव पश्यति, प्रण-

---

३३ अर्थदिदृक्षोर्दिदृक्षावस्थायामीप्सितवस्त्ववधारणावधानस्वभावमाविश्यैव इष्टार्थप्राप्तिरिति सावस्था प्रार्थनात्मेत्युपचरिता । वृत्तौ तु चक्षुषोरिति इन्द्रियान्तरोपलक्षणं, तेन शुश्रूषापिस्पृक्षावस्थापि एवमेवोपचर्यते इच्छापूर्वकत्वादेव समस्तार्थस्फुरणस्येति ।

३४ उक्तप्रकारेण निखिलग्राह्यग्राहकसंबन्धिदशासु तादात्म्यप्रति-

यस्यानतिक्रमात् इच्छाभ्यर्थनाया अनतिक्रमात्, यच्च तन्मध्ये हृदयं स्फुटतरम् अभिव्यक्तं नित्यं तदेतत् स्वप्नस्वातन्त्र्यम् इत्युच्यते, अयमेव तमोवरणनिर्भेद इत्यर्थः ॥३४॥

अन्यथा तु स्वतन्त्रा स्यात्सृष्टिस्तद्धर्मकत्वतः ।
सततं लौकिकस्येव जाग्रत्स्वप्नपदद्वये ॥३५॥

अन्यथा तु स्वरूपस्थित्यभावे स्वतन्त्रा स्यात् स्वप्ने आलबिडालदर्शनरूपा सृष्टिः, यस्मात् तत्तत्त्वं सृष्टिस्वभावं प्रसवधर्मत्वात्; यथा सततं सर्वस्य

---

पत्तिरूपस्य प्रणयस्यानुल्लङ्घनात् मनोवेद्यसृष्टिविषयेऽपि अभिमतार्थानां सुप्रकटतरमेव प्रथनमिति स्वाप्निका अर्थाः स्वातन्त्र्येण प्रसतुं नैव प्रभवेयुरिति अतो योगिनो निर्दिष्टदशयोरविशेषात् तमोवरणनिर्भेद आविर्भवेत् येन सिद्ध्यन्तरप्रसवः ।

३५ ज्ञानज्ञेयभावेन विजृम्भमाणे पदद्वयात्मनि शाक्तप्रसरे स्वसंवित्समाधाननिविडपरिशीलनानपायात् नित्ययुक्तस्य सृष्टिस्वभावमुक्तपदद्वयं शक्तिप्रतिबन्धं विधातुं नैव प्रभु, अन्यथावर्तमानस्तु लोकवत् स्वयैव भावसृष्ट्या परवशीक्रियते इति सदावहितेन भाव्यमित्यर्थः ।

---

पं० ८ ख' ग' पु० आडबिडेति पाठः ।

पं० ६ क' ख' पु० यथा सततमिति पाठः ।

लोकस्य जाग्रद्वृत्तौ स्वप्नावस्थायां च संबन्धा-संबन्धविकल्पाः ॥३५॥

यथा ह्यर्थोऽस्फुटो दृष्टः सावधानेऽपि चेतसि ।
भूयः स्फुटतरो भाति स्वबलोद्योगभावितः[३६] ॥३६॥

यथा किल दूरस्थितः कश्चिदर्थः पुरुषेण पूर्वं सावधानेनापि न लक्ष्यते स एव स्फुटतरो भवति, प्रयत्नविशेषेण निरूप्यमाणस्तत्रैव स्थितस्य ॥३६॥

तथा यत्परमार्थेन यदा यत्र यथा स्थितम् ।
तत्तथा बलमाक्रम्य न चिरात्संप्रवर्तते[३७] ॥३७॥

---

३६ दिदृक्षोश्चक्षुविस्फारणमात्रोपक्रमे विषयस्यास्फुटतयोपलम्भात् क्षणान्तरे स्फुटतरप्रकाशः, यस्माद्द्रष्टुर्दर्शनविषयेऽतिरिक्तदर्शनसाधनं नैव किमपि आह्रियते वास्तवस्वभावानुप्रवेशमन्तरेण, तदनाक्रमणादेव यथात्म्यप्रथोपपत्तेः इत्येवमर्थप्रथा सर्वसाधारणापि केवलं योगिन एवोक्तबलप्रत्यवमर्शप्रकाशिनी, नान्यस्य मायातिमिरान्धस्येति ।

३७ एवमुक्तबलाधिष्ठानादेव तत्तदवस्थाकारदेशकालाद्यविसंवादितया अतीताद्यव्यवहितविप्रकृष्टवस्तूनां विज्ञानं सुलभमेवेति पूर्व श्लोकदृष्टान्तद्वारोपोद्बलितमिति भावः ।

---

पं० १ घ' पु० स्वप्नावस्थायां च संबद्धा विकल्पा इति पाठान्तरं च संदृश्यते ।

तथा तेनैव प्रयत्नविशेषेण यत् वस्तु येन रूपेण यदा यस्मिन् काले, यत्र देशे, यथा येनाकारेण संस्थितं, तत् वस्तु तथा स्वबलं स्वस्वरूपमाश्रितस्याचिरेणैव कालेन प्रतिभाति निरावरणस्वरूपत्वात् तेनातीतानागतं ज्ञानं परिमितविषयं न किंचिदाश्चर्यम् ॥३७॥

दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः[38] ३८

क्षीणधातुरपि तद्बलमुत्साहलक्षणमाक्रम्य यतः कार्ये प्रवर्तते, यथा च कश्चित् अशक्तोऽपि व्यायामाभ्यासेन महतीं शक्तिं प्राप्नोति उद्योगबलेन, तथानेन स्वभावानुशीलनेन बुभुक्षामपि आच्छादयति योऽतिबुभुक्षितः स्यात्, यतः सर्व-

३८ बुभुक्षानिवृत्त्याद्यपि नित्यतृप्ताकृतकस्वबलप्रथनादेव सिध्यति इत्याद्युपलक्षितोऽन्यः सिद्धिप्रपञ्चोऽपि प्रोक्ततत्त्वासादनादेव प्रोन्मील्यते ।

पं० १ क' ख' पु० स्वेन रूपेणेति पाठः ।

पं० १० ख' पु० तथा च कश्चिदिति पाठः ।

त्रैवात्मस्वरूपस्य कार्यकारणसंपादनसामर्थ्यमविलम्बम् ॥३८॥

अनेनाधिष्ठिते देहे यथा सर्वज्ञतादयः।
तथा स्वात्मन्यधिष्ठानात्सर्वत्रैवं भविष्यति ३९

अनेनात्मस्वभावेन अधिष्ठिते व्याप्ते शरीरे सर्वज्ञतादयो यस्मात्, तत्र स्वल्पयूकाभक्षणमपि क्षिप्रमेव जानाति, तथा स्वात्मन्यवहितस्य सर्वत्र सर्वज्ञता भविष्यति ॥३९॥

ग्लानिर्विलुम्पिका[1] देहे तस्याश्चाज्ञानतः सृतिः।
तदुन्मेषविलुप्तं चेत्कुतः सा स्यादहेतुका ॥४०॥

---

३९ कल्पिताहंभावप्रत्ययप्रतिबन्धभङ्गात् चिन्मात्रात्मनि परप्रमातरि पूर्णाहंभाववतां निष्प्रत्यूहं सर्वविषयाः पूर्णज्ञातृत्वादयो गुणा अभिव्यज्यन्ते। अत्र च सर्वकर्तृत्वसर्वज्ञत्वादिगुणानां व्यक्त्युपायः सनिदर्शनं प्रतिपाद्यते इति।

४० अज्ञानेनैव पारमार्थिकस्वभावाख्यातेः शरीरोपचयापचयादिविकारास्तद्रहितचिदानन्दघनतत्त्वप्रत्यभिज्ञानात् पुनर्ग्लान्यादेरभावः इति तत्त्वप्रत्यभिज्ञानमेव व्याधिवलीपलितादेरुच्छेदोपायः।

---

पं० १ क' पु० विलुण्ठिका इति पाठः।

ग्लानिः किल शरीरस्य विनाशिनी, सा च ग्लानिरज्ञानादुत्पद्यते, तदज्ञानम् उन्मेषेणात्मस्वभावेन यदि नित्योज्झितं तदा सा कुतः, कारणरहिता भवेत्; अनेनैव कारणेन वलीपलिताभावः शरीरदार्ढ्यं च योगिनाम् ॥४०॥

एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत्[४१] ॥४१॥

एकत्र विषये व्यापृतचित्तस्य यतो यस्मात् स्वभावात् झगि[टि]त्यन्या चिन्तोपद्यते, स चिन्तायाः कारणम् उन्मेषो ज्ञातव्यः, स तु स्वयमेव योगिना लक्षणीयः, चिन्ताद्वयान्तर्व्यापकतयानुभूयमानः ॥४१॥

---

४१ अनुसंधातव्यवस्तुद्वयव्यापिनो विशुद्धचिन्मात्रस्य सर्वकारणस्यात्मन उन्मेषशब्देन व्यपदेश्यत्वात् तत्परिशीलनावधानादिकमेव उक्ताज्ञानविनाशीत्यर्थः ।

---

पं० ३ यदि पदं घ० पुस्तकाश्रयेणोपन्यस्तम् ।

पं० ११ क. पु० द्वयान्ते व्यापकेति पाठः ।

अतो बिन्दुरतो नादो रूपमस्मादतो रसः ।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः[४२] ॥४२॥

अतः, अस्मादुन्मेषादनुशील्यमानात् बिन्दुः तेजोरूपः, नादः प्रणवाख्यः शब्दः, रूपमन्धकारे दर्शनं, रसः अमृतास्वादो मुखे, एते क्षोभकत्वेन प्रवर्तन्ते अचिरेण कालेन ॥४२॥

दिदृक्षयेव सर्वार्थान्यदा व्याप्यावतिष्ठते ।
तदा किं बहुनोक्तेन स्वयमेवावभोत्स्यते[४३] ॥४३॥

दिदृक्षा द्रष्टुमिच्छा, तदवस्थास्थ इव सर्वान्

४२ धरातत्त्वध्यायिनां भ्रूमध्यादिप्रदेशे प्रथमानस्तेजोविशेषो बिन्दुः । व्योमधारणाभ्यासवतां स्वयमुच्चरितो ध्वनिविशेषो नादः । तेजोधारणाभ्यासिनामन्धतमसेऽपि दृश्यवस्तुदर्शनं रूपम् । रसवद्वस्तु-राहित्येऽपि तदास्वादो रसोऽप्तत्त्वध्यायिगम्यः इत्येतत्सर्वमुन्मेषाभ्यासिनो विघ्नरूपं सिद्धिजातं समुल्लसतीत्यर्थः ।

४३ यथा क्षेत्रज्ञानां स्वसंविदो दिदृक्षितभावानां दर्शनेच्छा-यामभेदः तथैव विश्वगतभावानां परमात्मतत्त्वादव्यतिरेक इति संवित्त-

पं० ४ ग० पु० प्राणाख्य इति पाठः, अन्धकारे दर्शनमितिवाक्यं तु घ० पु० एव संदृष्टमुपन्यस्तम् ।

पं० ८ ख० ग० पु० स्वयमेवावगंस्यति इति पाठः ।

भावान् यदा व्याप्यावतिष्ठते, तदा किं बहुना उक्तेन, स्वयमेव तत्त्वस्वभावमवभोत्स्यते ज्ञास्यति ॥४३॥

प्रबुद्धः सर्वदा तिष्ठेज्ज्ञानेनालोच्य गोचरम् ।
एकत्रारोपयेत्सर्वं ततोऽन्येन न पीड्यते ॥४४॥

प्रबुद्धोऽसंकुचितशक्तिः सर्वकालं तिष्ठेत्, ज्ञानेनालोच्य गोचरम् ज्ञेयं परिच्छिद्य, एवमेकत्र तत्त्वसद्भावे विद्यात्मके आरोपयेत् सर्वम्, ततोऽन्येन वक्ष्यमाणेन कलासमूहेन न पीड्यते ॥४४॥

---

त्वान्तर्लीनान् भावात् विधाय प्रोक्तपरतत्त्वपरामर्शाभ्यासात् साधनान्तरनिरपेक्षं तद्दशाफलं केवलं योगिन एव स्वसंवेद्यं, विकल्पतिमिरोपहतचक्षुषस्तु पाशवसृष्टौ स्वाभेदमपि वस्तु परामृष्टुमक्षमता कुतो नु जगद्भावाभेदपरामर्शप्रतिपदिति योग्येव एतत्प्रज्ञापात्रम् ।

४४ यत्किंचिद्वस्तु प्रमाणोपारोहक्रमेण परप्रमात्रावेशभाक् अन्यथा प्रकाशपदव्यामनारूढेर्वस्तुसत्तानुपपत्तेः, इत्येतत्संबन्धेऽवहिता उद्रिक्तायमानेनेव कलादिक्षित्यन्तेन वेद्याभिमानेन नैव खिद्यन्ते इत्युक्तोपदेशद्रढिमा समर्थ्यते ।

---

पं० २ क' पु० तत्त्वस्वभावोऽवगम्यते इति, ग' पु० स्वभावमवगच्छतीति, घ. पु० स्वभावोऽवगंस्यते इति पाठः ।

पं० ६ घ' पु० तत्त्वस्वभावे इति पाठान्तरं च दृश्यते ।

**शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् ।**
**कलाविलुप्तविभवो गतः सन्स पशुः स्मृतः[४५] ४५**

शब्दराशिरकारादिक्षकारान्तः, तत्समुद्भूतस्य कादिवर्गात्मकस्य ब्राह्मयादिशक्तिसमूहस्य, भोग्यतां गतः पुरुषो, ब्राह्मयादीनां कलाभिः ककाराद्यक्षरैर्विलुप्तविभवः स्वस्वभावात् प्रच्यावितः पशुरुच्यते ॥४५॥

**परामृतरसापायस्तस्य यः प्रत्ययोद्भवः ।**
**तेनास्वतन्त्रतामेति स च तन्मात्रगोचरः[४६] ॥४६॥**

परामृतरसात् स्वरूपात् अपायः प्रच्युतिः तस्य यः प्रत्ययोद्भवो विषयदर्शने स्मरणोदयो यतः, तेन पुरुषोऽस्वतन्त्रताम् असर्वगत्वं च प्राप्नोति,

---

४५ भूचर्यादिशक्तिभिरनवरतं प्रदर्श्यमानभेदप्रथत्वात् पराधीनाखिलवृत्तिकोऽपहृतैश्वर्यः स्ववशीक्रियते इत्यर्थः।

४६ सहजमलमूलकमेव पशोरस्वातन्त्र्यं तदधिकरणेन विशेषवृत्तिमायीयप्राकृतिकावरणेन अत्यन्ताश्यानदुर्भेदसुदृढावरणप्रतिबन्धोऽनर्थरूपोऽनन्तप्रतान इति भावः।

---

पं० ११ ग' पु० विषयदर्शनस्मरणेति समस्तः पाठः।

स च प्रत्ययः तन्मात्रगोचरो रूपाद्यभिलाषात्मकः ॥४६॥

स्वरूपावरणे चास्य शक्तयः सततोत्थिताः ।
यतः शब्दानुवेधेन न विना प्रत्ययोद्भवः[४७] ॥४७॥

स्वरूपस्य स्वभावस्याच्छादने चास्य पुरुषस्य शक्तयो ब्राह्म्याद्याः पूर्वमुक्ता याः, ताः सततम् उद्युक्ताः, यतः शब्दरहितस्य प्रत्ययस्य ज्ञानस्य नास्त्येव कस्यचिदुद्भवः ॥४७॥

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका[४८] ४८

सा चेयं क्रियास्वभावा भगवतः पशुवर्तिनी शक्तिः । यदुक्तम्

---

४७ कवर्गाद्युत्पन्ना एव प्रत्ययाः, तदधिष्ठात्र्यः पीठेश्वर्यो माहेश्याद्यास्ता एव पशोः पारस्वरूपमावरीतुं सदोद्युक्ताः, अत एवोत्तरोत्तरं विषयभोगासक्तानामणूनां संसृतिरविरतप्रसरणेति ।

४८ बहिर्भावपर्यन्तं प्रसृतायाः पारमेश्वर्याः क्रियाशक्तेरेव हेतोर्भेदाभेदसंवेदननिबन्धनैव बन्धमोक्षविकल्पनेत्यर्थः ।

'न सा जीवकला काचित्संतानद्वयवर्तिनी।
व्याप्त्री शिवकला यस्यामधिष्ठात्री न विद्यते ॥'

इति। सैव च बन्धकारणम् अज्ञाता, ज्ञाता सा च पुनः परापरसिद्धिप्रदा भवति पुंसाम् ॥४८॥

**तन्मात्रोदयरूपेण मनोऽहंबुद्धिवर्तिना।**
**पुर्यष्टकेन संरुद्धस्तदुत्थं प्रत्ययोद्भवम् ॥४९॥**

तन्मात्रोदयः, तन्मात्राणां शब्दादीनामनुभवरूपेण, मनोऽहंकारबुद्धिभिः इति त्रिभिः परामृश्यमानेन पुर्यष्टकेन बद्धः, तदुत्थं तस्मादुद्भूतं सुखदुःखसंवेदनरूपं तदा ॥४९॥

**भुङ्क्ते परवशो भोगं तद्भावात्संसरत्यतः।**
**संसृतिप्रलयस्यास्य कारणं संप्रचक्ष्महे ॥५०॥**

भुङ्क्ते अश्नाति, अस्वतन्त्रो, भोगं सुखदुःखसंवेदनरूपं, तस्य पुर्यष्टकस्य भावात् संसरति

---

४९–५० पुर्यष्टकसंरुद्धत्वादेवास्य पशोः कर्मचक्रभ्रम्यनुभवः, इत्यतः संसृतिविनाशकारणं साधनं वक्ष्यमाणमुपपद्यते।

---

पं० १२ घ' पु० संसृतिप्रत्ययस्येतीत्थं शोधितः पाठः संलक्ष्यते।

संसारशरीरे, अतः संसृतिप्रलयस्य जन्ममरण-प्रवाहरूपस्य संसारस्य विनाशकारणं संप्रचक्ष्महे वक्ष्यामः ॥५०॥

**यदा त्वेकत्र संरूढस्तदा तस्य लयोदयौ ।**
**नियच्छन्भोक्तृतामेति ततश्चक्रेश्वरो भवेत् ॥५१॥**

यदा पुनस्त्वेकत्र स्थूले सूक्ष्मे वा संरूढो लीनचित्तः, तदा तस्य प्रत्ययोद्भवस्य लयोद्भवौ ध्वंसप्रादुर्भावौ नियच्छन् कुर्वन् भोक्तृतां प्राप्नोति, ततः चक्रेश्वरो भवेत् सर्वाधिपतिर्भवति ॥५१॥

**अगाधसंशयाम्भोधिसमुत्तरणतारिणीम् ।**
**वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ॥५२॥**

अगाधो ह्यप्रतिष्ठोऽनन्तः ॥५२॥

इति श्रीभट्टकल्लटविरचितायां स्पन्दकारिकावृत्तौ विभूतिस्पन्द-स्तृतीयो निःष्यन्दः ॥ ३ ॥

---

५१ एवं प्राक्प्रतिपादितस्योपलब्ध्रेकस्वभावस्य स्वात्मनो निविड-वितर्कपरिशीलनया विकल्पहान्याद्युपायवृत्त्या भूतभावात्मकयोः शरीर-

---

पं० १ घ० पु० संसृतिप्रत्ययस्येतीत्थं शोधितः पाठः ।

पं० १० क० पु० संशयाम्भोधेरिति, ग० पु० संशयाम्भोधौ इति पाठः ।

समाप्तं स्पन्दसर्वस्वं प्रवृत्तं भट्टकल्लटात्।
स्वप्रकाशैकचित्तत्त्वपरिरम्भरसोत्सुकात् ॥१॥

दृब्धं महादेवगिरौ महेश-
स्वप्नोपदिष्टाच्छिवसूत्रसिन्धोः।
स्पन्दामृतं यद्वसुगुप्तपादैः
श्रीकल्लटस्तत्प्रकटीचकार ॥२॥

आ तपनान्मोटकान्तं यस्य मे गुरुसंततिः।
तस्य मे सर्वशिष्यस्य नोपदेशदरिद्रता ॥३॥

परिपूर्णेयं स्पन्दवृत्तिः कृतिस्तत्रभवन्महामाहेश्वराचार्यवर्यभट्ट-श्रीकल्लटपादानाम् ॥

---

योरन्यतरस्मिन् अविकल्पसंवित्स्वरूपप्राप्तेः गोचर्यादिशक्तिचक्रस्यानधी-नवृत्तित्वात् स्वैश्वर्यविजृम्भामात्रविज्ञानेन तदीश्वरः पतिः संपद्यते इति।

कश्मीरेन्द्रैः श्रीमत्प्रतापसिंहैः पुराणविद्यानाम्।
जीर्णोद्धारादिकर्मणि नियुक्तसद्भिर्मुकुन्दरामाद्यैः ॥
शाकेऽग्निघ्नशिवाङ्कन्दुमिते स्पन्दस्य कारिकावृत्तेः
संक्षिप्तार्थप्रकाशः समग्राहि स्ताच्छिवाय भव्यानाम् ॥

---

पं० ४ क० पु० चित्तत्त्वे परिरम्भेतिपाठः।